स होवाचाजातशत्रुः । ( य॒त्रै ) य॒त्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते ॥ १७ ॥

तानि यदा गृह्णाति । ( त्यु ) अथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः ॥ १८ ॥

स यत्रैतत्स्वप्न्यया चरति । ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति ॥ १९ ॥

---

स होवाचाजातशत्रुः । यत्रैष एतत्सुप्तोऽभूत् । य एष विज्ञानमयः पुरुषः । तदेषां प्राणानां विज्ञानेन विज्ञानमादाय । य एषोऽन्तर्हृदये आकाशः तस्मिन् शेते ॥ १७ ॥

तानि यदा गृह्णाति । अथ ह एतत्पुरुषः स्वपिति नाम । तद्गृहीत एव प्राणो भवति । गृहीता वाक् । गृहीतं चक्षुः । गृहीतं श्रोत्रम् । गृहीतं मनः ॥ १८ ॥

स यत्रैतत् स्वप्न्यया चरति । ते हास्य लोकाः । तदुतेव महाराजो भवति । उतेव महाब्राह्मणः उतेवोच्चावचं निगच्छति ॥ १९ ॥

---

जागरिते कर्तृत्वभोक्तृत्वादिकं नात्मनः स्वाभाविकम् । किंतु वागाद्युपाधिसंबन्धकृतमेव । स्वापे तद्व्यतिरेकेण कर्तृत्वादेर्व्यतिरेकदर्शनात् तत् दर्शयितुं प्रश्नानुवादपूर्वकं प्रथमप्रश्नस्योत्तरमाहेति श्रुतिर्दर्शयति—होवाचाजातशत्रुरिति । 'यत्र' यस्मिन् काले 'सुप्तोऽभूत्' 'य एष विज्ञानमयः पुरुषः' । तस्मिन् काले 'एषां प्राणानां' वागादीनां 'विज्ञानं' स्वस्वविषयगतप्रतिनियतप्रकाशनसामर्थ्यं 'विज्ञानेन' अन्तःकरणोपाधिज्ञानलक्षणेन स्वगतविशेषविज्ञानेन चैतन्याभासलक्षणेनादाय गृहीत्वा 'अन्तर्हृदये' हृदयस्य मध्ये 'य आकाशः' । आकाशशब्देन जीवस्य स्वाभाविकस्वरूपभूतः परमात्मा उच्यते । तस्मिन् स्वाभाविके स्वात्मनि परमात्मनि 'आकाशे शेते' । लिङ्गोपाधिसंबन्धजनितविशेषात्मस्वरूपमुत्सृज्य अविशेषे स्वाभाविके आत्मन्येव केवलं वर्तत इत्यभिप्रायः ॥ १७ ॥

यदा वागादीन्द्रियाण्यस्तमनुगच्छन्ति तदा असौ स्वात्मनि वर्तते इति कथमवगम्यत इत्याशङ्कायां नामनिर्वचनादित्याह—तानि यदेति । 'तानि' वागादीनि विज्ञानमयस्थानानि 'यदा' यस्मिन् काले 'गृह्णाति' आदत्ते 'अथ' तदा 'ह' किल 'पुरुषः' इति पुरुषस्यैतत् 'स्वपिति नाम' । अतः अस्य 'ह' प्रसिद्धं गौणमेव स्वपितीत्येतन्नाम भवति । स्वमेवात्मानमपीति अपिगच्छतीति स्वपितीत्युच्यते इति न्यायेन स्वपितीति नामनिरुक्त्या आत्मनः स्वात्मन्यवस्थितिरुक्ता । अवगतेऽपि तत्र युक्तिरस्तीत्याशङ्कायामाह—तद्गृहीत एवेति । तदत्र स्वापकाले 'गृहीत एव प्राणो भवति' । प्राण इति घ्राणेन्द्रियं वागादिप्रकरणात् । 'गृहीता वाक्' चक्षुः श्रोत्रं मनश्च गृहीतं भवतीति । एवं वागादिषु व्यापाराभावात् स्वापे कर्तृत्वाद्यभावः । जागरिते च वागादिसंबन्धात् कर्तृत्वादिकम् । अतः स्वापव्यतिरेकाभ्यां वागाद्युपाधिकं आत्मनः संसारित्वं इति निश्चितम् ॥ १८ ॥

ननु—दर्शनलक्षणायां स्वप्नावस्थायां वागादिव्यापाराभावेऽपि कर्तृत्वादिसंसारस्य दर्शनात् स्वरूपेणाप्यसिद्धिः

स यथा महाराजो जानपदान्गृहीत्वा । स्वे जनपदे यथाकामम्परिवर्त्ततै-
वमेवैषऽएतत्प्राणान्गृहीत्वा स्वे शरीरे यथाकामम्परिवर्त्तते ॥ २० ॥

( तेऽथ ) अथ यदा सुषुप्तो भवति । यदा न कस्यचन वेद हिता नाम
नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः
प्रत्यवसृप्य पुरीतति शेते ॥ २१ ॥

---

स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेत । एवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥ २० ॥

अथ यदा सुषुप्तो भवति । यदा न कस्यचन वेद । हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते । ताभिः प्रत्यवसृप्य पुरीतति शेते ॥ २१ ॥

---

रित्याशङ्कायां तत्रापि जाग्रद्वासनायाः सत्त्वात् परिकल्पितस्य स्वप्नप्रपञ्चस्य मृषात्वात् न व्यतिरेकासिद्धिरि-त्यतोऽस्य स्वतः शुद्धत्वमेवेत्यभिप्रेत्याह—स यत्रेति । ‘स ’ प्रकृत आत्मा ‘ यत्र ’ यस्मिन् काले दर्शनलक्षणया ‘ स्वप्न्यया ’ स्वप्नवृत्त्या ‘ चरति ’ वर्तते । तदा ‘ ह ’ इति प्रसिद्धौ अस्यात्मनस्ते अनन्तरं वक्ष्यमाणा ‘ लोकाः ’ कर्मफलानि । के ते इत्यत आह—तदुतेति । तत्र ‘ महाराज इवापि महाराज इव भवति ’ । महाराजत्व-मिवास्य सोऽयं लोक न तु जागरित इव साक्षान्महाराजत्वम् । तथा ‘ उत महाब्राह्मण इव ’ । उतापि ‘ उच्चावच ’ उच्चं देवत्वादि अवचं तिर्यक्त्वादि इत्युच्चावचमिव ‘ निगच्छति ’ नितरां प्राप्नोतीत्यर्थः ॥ १९ ॥

तथा च वेदशब्दप्रयोगात् व्यभिचारदर्शनाच्चैते महाराजत्वादयो लोका मृषैव वासनामात्रभूता इत्युक्तमर्थं दृष्टान्तपूर्वकमाह—स यथेति । ‘ स ’ इति दृष्टान्तः । ‘ यथा महाराजः ’ सार्वभौमः ‘ जानपदान् ’ जनपदे देशे भवान् राजोपकरणभूतान् भृत्यान् अन्यांश्च तथाविधान् गृहीत्वोपादाय स्वीये आत्मीये एव ‘ जनपदे ’ जयादिनोपार्जिते ‘ यथाकामं ’ यः कामो यस्य स कामस्तमनतिक्रम्येति यथेच्छं ‘ परिवर्तेत ’ परिक्रामेदित्यर्थः । ‘ एवमेव ’ ‘ एष ’ विज्ञानमय आत्मा । एतदिति ग्रहणक्रियाया विशेषणम् । एतद्ग्रहणं यथा स्यात्तथा ‘प्राणान्’ वागादीन् ‘ गृहीत्वा ’ जागरितस्थानेभ्य उपसंहृत्य ‘ स्वे शरीरे ’ स्व एव देहे ‘ यथाकामं परिवर्तते ’ । न बहिरित्यर्थः । कामकर्मभ्यामुद्भासिता पूर्वानुभूतवस्तुसदृशी वासना अनुभवत इत्यर्थः । तस्मादसौ विज्ञानमयो दृष्टान्तेभ्यः स्वप्नजागरितलोकेभ्य अन्यो विशुद्धः इति सिद्धम् ॥ २० ॥

दर्शनवृत्तौ स्वप्ने वासनाराशेर्दृश्यत्वात् असंसारधर्मता इत्यात्मनो विशुद्धता अवगता । तत्र “ यथाकामं परिवर्तते ” इति कामवशात् परिवर्तनमुक्तम् । इत्यस्य संसारधर्मस्य स्वाभाविकत्वमुक्तमित्याशङ्कायां न तद्-धर्मस्य सुषुप्तौ व्यतिरेकदर्शनेन अस्वाभाविकत्वात् शुद्धत्वमेवास्य स्वाभाविकमिति वक्तुमाह—अथ यदेति । ‘अथ’ पुनः ‘ यदा ’ यस्मिन् काले जाग्रत्स्वप्नयोर्द्वयोर्दर्शनवृत्तिं हित्वा ‘ सुषुप्तः ’ सुषु सुप्तः विशेषज्ञाना-भावेन संप्रसादं स्वस्वरूपमेकत्वं गतः ‘ भवति ’ । सलिलमिव अन्यसम्पर्काद्भेदं हित्वा स्वाभाव्येन प्रसन्नो-ऽस्त्यर्थः । कदा सुषुप्तो भवति । ‘ यदा ’ यस्मिन् काले ‘ न कस्यचन ’ कंचन विषयं ‘ वेद ’ विजानाति । कस्यचन वा शब्दादेः सर्वमपि वस्त्वन्तरं किंचन न वेद । अस्मिन्पक्षे किंचनेत्यध्याहार्यम् । केन पुनः क्रमेण सुषुप्तो

स यथा कुमारो वा महाब्राह्मणो वा । ( ऽ ) अतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैषऽएतच्छेते ॥ २२ ॥

स यथोर्णनाभिस्तन्तुनोच्चरेत् । ( य ) यथाऽग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्वऽएतऽआत्मानो व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यन्तेषामेष सत्यम् ॥ २३ ॥

इति चतुर्दशे काण्डे चतुर्थप्रपाठके बृहदारण्यकोपनिषदि द्वितीये प्रपाठके प्रथमं ब्राह्मणम् ॥ १४ ( ४ ) २ । १ ( ९ ) २–१ ॥

---

स यथा कुमारो वा महाब्राह्मणो वा अतिघ्नीमानंदस्य गत्वा शयीत । एवमेवैष एतत् शेते ॥ २२ ॥

स यथा ऊर्णनाभिस्तंतुनोच्चरेत् । यथा अग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंति । एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एते आत्मानः व्युच्चरंति । तस्योपनिषत् सत्यस्य सत्यमिति । प्राणा वै सत्यम् । तेषामेष सत्यम् ॥ २३ ॥

---

भवतीत्यत आह–हिता नामेति । 'हिता नाम' हितफलप्राप्तिनिमित्तत्वात् 'हिताः' इत्येवंनाम्न्यो 'नाड्यः' शिराः देहस्यान्नरसविपरिणामभूता । ताश्च द्वासप्ततिका सन्ति 'द्वासप्ततिः सहस्राणि' 'हृदयात्पुरीततमभिप्रतिष्ठन्ते' । हृदय नाम उदरवक्षःप्रदेशयोर्मध्यस्थितः पुण्डरीकाकारो मांसपिण्डः । तत्परिवेष्टनं पुरीतत् इत्युच्यते । इह पुनस्तदुपलक्षितं शरीरं पुरीतच्छब्देनाभिप्रेतम् । तथा च 'हृदयात्' 'पुरीतत' शरीरमभिप्रतिष्ठन्ते इति कृत्स्नं शरीरं व्याप्नुवन्त्यः अश्वत्थपर्णराजय बहिर्मुखाः प्रवृत्ता अभितोऽभितः सर्पन्तीत्यर्थः । ततः किमित्यत आह–ताभिरिति । ताभिर्नाडीभिः कृत्वा जाग्रद्विषयाया बुद्धेः कर्मवशात्प्रत्यवसर्पणमनु विज्ञानमय आत्मा 'प्रत्यवसृप्य' इन्द्रियाण्युपसंहृत्य 'पुरीतति' शरीरे 'शेते' अग्नितप्तमिव लोहपिण्डं अविशेषेण संव्याप्य वर्तत इत्यर्थः । ननु–पूर्वं विज्ञानमयो हृदयाकाशे स्वपिति शेते इत्युक्त्वा इदानीं पुरीतति शयनमात्रवचनात्कथं न पूर्वापरविरोधः स्यादिति चेत् सुप्त स्वाभाविके एव स्वात्मनि वर्तमानोऽपि कर्मानुगबुद्ध्यनुगामित्वात् पुरीतति शेते इत्युपचारादुच्यते । अतो नोक्तविरोधः ॥ २१ ॥

उक्त शयन दृष्टान्तद्वयेनाह–स यथेति । सर्वसंसारदुःखवियुक्त इयमवस्था इत्यत्र 'स' इति दृष्टान्तः । 'यथा कुमारः' अत्यन्तबालः 'वा' 'महाब्राह्मणो वा' अत्यन्तपरिपक्वविद्याविनयसम्पन्नो यथोक्तश्च 'अतिघ्नीं' अतिशयेन दुःखं हन्तीत्यतिघ्नी 'आनन्दस्य' सुखस्यावस्था तां 'गत्वा' प्राप्य 'शयीत' दुःखानुविद्धसुखसामान्ये वर्तेत । 'एवमेव' 'एषः' विज्ञानमयः सर्वसंसारधर्मातीतः एतच्छयनं यथा स्यात्तथा 'शेते' सुखी वर्तेत इत्यर्थः ॥ २२ ॥

एवं चैव तदाऽऽदित्यस्य पूर्वप्रश्नस्य प्रतिवचनमुक्तम् । अनेन च प्रश्ननिर्णयेन विज्ञानमयस्य स्वभावतो विशुद्धिरसंसारित्वं बोध्यम् । इदानीं तस्मादितिभवति प्रकटयितुं पुन एतस्मादिति द्वितीयप्रश्नस्य प्रत्या-

यो ह वै शिशुम् । (यो) साधानꣳ सप्रत्याधानꣳ सस्थूणꣳ सदा-म्वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि ॥ १ ॥

---

सर्वाङ्गब्राह्मणं वा शिशुब्राह्मणम् ।

यो ह वै शिशुं साधानं सप्रत्याधानं सस्थूणं सदामं वेद । सप्त ह द्विषतो भ्रातृव्यानव-रुणद्धि ॥ १ ॥

---

( द्वय ) अयम्वाव शिशुः । ( व्यौ ) योऽयम्मध्यमः प्राणस्तस्येदमेवाधानमिदम्प्रत्याधानम्प्राणः स्थूणाऽन्नन्दाम तमेताः सप्ताक्षितयऽउपतिष्ठन्ते ॥ २ ॥

तद्याऽइमाऽअक्षँल्लोहिन्यो राजयः । ( स्ता ) ताभिरेनँ रुद्रोऽन्वायत्तोऽथ याऽअक्षन्नापस्ताभिः पर्जन्यो या कनीनका तयाऽऽदित्यो यच्छुक्लन्तेनाग्निर्यत्कृष्णन्तेनेन्द्रोऽधरयैनम्वर्त्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते यऽएवम्वेद ॥ ३ ॥

---

अयं वाव शिशुः । यः अयं मध्यमः प्राणः । तस्येदमेवाधानम् इदं प्रत्याधानम् । प्राणः स्थूणा । अन्नं दाम । तमेताः सप्ताक्षितय उपतिष्ठन्ते ॥ २ ॥

तद्या इमा अक्षँल्लोहिन्यो राजयः । ताभिरेनं रुद्रोऽन्वायत्तः । अथ या अक्षन्नापः । ताभिः पर्जन्यः । या कनीनका । तया आदित्यः । यत् शुक्लं, तेनाग्निः । यत् कृष्णं, तेनेन्द्रः । अधरयैनं वर्तन्या पृथिव्यन्वायत्ता । द्यौरुत्तरया । नास्यान्नं क्षीयते । य एवं वेद ॥ ३ ॥

---

एवं फलश्रवणेन अभिमुखीभूताय जिज्ञासवे आह—अयं वावेति । 'अयं वाव' अयमेव शिशुरिव 'शिशुः' विषयेषु इतरकरणवत् अप्रवृत्तत्वात् । कोऽसौ ? 'योऽयं' 'मध्यमः' शरीरमध्यस्थः 'प्राणः' लिङ्गशरीरात्मा पञ्चधा शरीरमाविष्टः "बृहन्पाण्डरवासः सोम राजन्" इत्युक्तः पञ्चीशरात्कुनिदर्शनात् यस्मिन्वाङ्मनः प्रभृतीनि करणानि विषक्तानि । स एव शिशुरित्यर्थः । 'तस्य' शिशोः प्राणस्य वत्सस्थानीयस्य करणात्मनः 'इदं' कार्यात्मकं शरीरमेव 'आधानं' आधीयतेऽस्मिन्निति आधानमधिष्ठानम् । 'तस्य' प्राणस्य 'इदं' प्रसिद्धं शिरो मस्तकं 'प्रत्याधानं' प्रदेशविशेषेषु प्रतिमत्याऽऽधीयत इति प्रत्याधानम् । 'प्राणः' बलापरपर्यायोऽन्नपानजनिता शक्तिः 'स्थूणा' अवष्टम्भः । बलावष्टम्भो हि प्राणोऽस्मिञ्छरीरे अवतिष्ठत इत्यर्थः । 'तस्य' प्राणस्य 'अन्नं' भुक्तमशनं 'दाम' उभयतः पाशी, वत्सस्येव बन्धने बन्धनरज्जु इत्यर्थः । इदानीं तस्यैव शिशोः प्रत्याधाने शिरसि आरूढस्य चक्षुषि कश्चन उपनिषद् उच्यते—तमेता इति । 'तं' करणात्मके शरीरे अवस्थितं चक्षुष्यूढं प्राणं 'एताः' वक्ष्यमाणाः 'सप्त' सप्तसंख्याकाः 'अक्षितयः' अक्षितिहेतुत्वात् 'अक्षितयः' 'उपतिष्ठन्ते' उपस्थानं कुर्वन्ति । "उपान्मन्त्रकरणे" ( पा. सू. १–३–२५ ) इति "आदित्यमुपस्थानमुपतिष्ठते" इतिवत् मन्त्रकरणे उपपूर्वस्य तिष्ठतेरात्मनेपदं विहितं इहापि समन्देवताभिधानानि मन्त्रस्थानीयानि करणानि । अतस्तिष्ठतेः अत्रात्मनेपदं न विरुद्धम् ॥ २ ॥

कास्ता अक्षितय इत्यत आह—तद्याऽइमा इति । तत्र 'याः इमाः' प्रसिद्धाः 'अक्षन्' अक्षिणि नेत्रे 'लोहिन्यः' लोहिताः 'राजयः' रेखाः । 'ताभिः' रेखाभिः द्वारभूताभिः 'एनं' मध्यमं प्राणं 'रुद्रोऽन्वायत्तः' अनुगतः उपतिष्ठते इत्यर्थः । अथानन्तरं अक्षण्यक्षिणि 'या आपः' धूमादिसम्पर्केणाभिव्यज्यमानाः ताभिरद्भिर्द्वारभूताभिः 'पर्जन्यः' देवतात्मा अन्वायत्तः । 'या कनीनका' चक्षुषि दृक्शक्तिः । 'तया' कनीनकया द्वारभूतया 'आदित्यः' मध्यमं प्राणमुपतिष्ठते । चक्षुरक्षचक्षुषि तेन रूपमभिव्यज्यते । यच्छुक्लं

तुदेष श्लोको भवति । ( स्व [illegible]
न्युशो निहितम्विश्वरूपम् । [illegible]
ब्रह्मणा सम्विदानेति ॥ ४ ॥

( त्य ) अर्वाग्बिलश्चमसऽऊर्ध्वबुध्नऽइति । ( ती ) इदन्तच्छिरऽएष ह्यर्वाग्बिलश्चमसऽऊर्ध्वबुध्नस्तस्मिन्यशो निहितम्विश्वरूपमिति प्राणा वै यशो निहितम्विश्वरूपम्प्राणानेतदाह तस्यासतऽऋषयः सप्त तीरऽइति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा सम्विदानेति वाग्ध्यष्टमी ब्रह्मणा सम्वित्ते ॥ ५ ॥

---

तदेष श्लोको भवति—" अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम् । तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना "–इति ॥ ४ ॥

अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति । इदं तच्छिरः । एष हि अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः । तस्मिन् यशो निहितं विश्वरूपमिति । प्राणा वै यशो निहितं विश्वरूपम् । प्राणानेतदाह । तस्यासत ऋषयः सप्त तीर इति । प्राणा वा ऋषयः । प्राणानेतदाह । वागष्टमी ब्रह्मणा संविदानेति । वाक् हि अष्टमी ब्रह्मणा संविचे ॥ ५ ॥

---

चक्षुषि तेनेन्द्रोऽन्वायत्तः । ' अधरया ' अधमन्या ' वर्तन्या ' पक्ष्मणा ' एत ' मध्यम प्राण ' पृथिवी ' ' अन्वायत्ता ' अधरत्वसामान्यात् । ' द्यौः ' स्वर्ग उत्तरयोरभिभागस्यया ' वर्तन्या ' पक्ष्मणा ' अन्वायत्ता ' ऊर्ध्वत्वसामान्यात् । एवंविधोपासितफलमाह—नास्यान्नमिति । ' य ' एवमुक्तप्रकारेण प्राणस्य अन्नभूता' सप्ताक्षितिर्वेद । अस्योपासकस्यान्न ' न क्षीयते ' ॥ ३ ॥

उक्ता रुद्रादिदेवताः प्राणोपासनात् वागात्मिका एव सङ्गता इति वागादय एवात्र रुद्रादिशब्दाभिधेयाः इत्यभिप्रेत्योक्तेऽर्थे मन्त्रसम्मतिमाह—तदेष श्लोको भवतीति । तत्र एतस्मिन्नर्थे ' एष श्लोकः ' मन्त्रः ' भवति ' । अर्वाग्बिलश्चमस इत्यादिः, मन्त्रसमाप्तिद्योतक इतिशब्दः ॥ ४ ॥

त मन्त्र प्रतीकग्रहणपूर्वक व्याकरोति । " अर्वाग्बिलश्चमसऽ ऊर्ध्वबुध्नः " इत्यस्मिन्मन्त्रभागे ' तत् ' प्राणस्य प्रत्यायतनत्वेनोक्त ' इद ' प्रसिद्धं ' शिर. ' एव ' एष. ' ' अर्वाग्बिल ' अवाङ्मुख ' ऊर्ध्वबुध्नः ' ऊर्ध्वमूल ' चमस ' चमत्यस्मिन्निति व्युत्पत्त्या चमस पात्रविशेष उक्तः । कथ ? ' हि ' यस्मादेव शिरोलक्षण-चमस ' अर्वाग्बिल. ' अधःस्थितस्यैव मुखस्य बिलरूपत्वात् शिरसो बुध्नाकारस्य उपरिभागे दृश्यमानत्वाच्च । तस्माच्छिर एव उक्तलक्षणचमस. । ' तस्मिन् ' शिरसि ' विश्वरूप ' नानारूप ' यशो निहित ' स्थितम् । यथा सोमश्चमसे इति मन्त्रभाग । किं पुनस्तद्यश ? ' प्राणा ' श्रोत्रादय. सप्त प्रोक्ता । तेषु प्रसृता वागादयश्च ' वै ' प्रसिद्ध ' विश्वरूप ' विषयाणामनेकत्वेन अनेकरूप शब्दादिज्ञानलक्षण ' यश. ' शिरसि ' निहितम् ' । अतः प्राणानेव एतद्यश इति मन्त्रभाग आह । ' तस्य ' शिरोलक्षणस्य चमसस्य ' तीरे ' पार्श्वे " सप्त ऋषय. " ' आसते ' वर्तन्ते इति मन्त्रार्थ. । ' प्राणा. ' करणात्मका. परिस्पन्दात्मका सप्त वायव एव ' ऋषय. '

द्वे वाव ब्रह्मणो रूपे । मूर्तञ्चैवामूर्तञ्च मर्त्यञ्चामृतञ्च स्थितञ्च यच्च सच्च त्यच्च ॥ १ ॥

तदेतन्मूर्तम् । ( संम् ) यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत् ॥ २ ॥

( त् ) तस्यैतस्य मूर्तस्य । ( स्यै ) एतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सतऽएष रसो यऽएष तपति सतो ह्येष रसः ॥ ३ ॥

---

## मूर्तामूर्तब्राह्मणम् ।

द्वे वाव ब्रह्मणो रूपे—मूर्तं चैवामूर्तं च । मर्त्यं चामृतं च । स्थितं च यच्च । सच्च त्यच्च ॥ १ ॥

तदेतन्मूर्तं यदन्यद् वायोश्चान्तरिक्षाच्च । एतन्मर्त्यम् । एतत् स्थितम् । एतत्सत् ॥ २ ॥

तस्यैतस्य मूर्तस्य, एतस्य मर्त्यस्य, एतस्य स्थितस्य, एतस्य सत एष रसः । य एष तपति । सतो हि एष रसः ॥ ३ ॥

---

अथ कथमेषां प्राणानां सत्यत्वं यथा वा ततोऽप्यात्मनः सत्यत्वमिति जिज्ञासायां कार्यकारणात्मकानां समस्तानां पञ्चभूतानां स्वरूपकथनपूर्वकं मूर्तामूर्तब्राह्मणं प्रवर्तते—द्वे वावेति । यद्यपीदं ब्रह्म 'नेति नेति' इत्यादिना निषिध्यमानविशेषं तथापि तस्य ब्रह्मणो मायामयं 'द्वे वाव' द्वे एव 'रूपे'। स्वरूपेण ज्ञायते अन्यत् परं ब्रह्म याभ्यां अविद्याऽध्यारोपिताभ्यां लक्ष्यते । के ते इत्यत आह—मूर्तञ्चैवामूर्तञ्चेति । मूर्तामूर्तयोः प्रत्येकं अर्थप्रतिपादकानि विशेषणान्याह—'मर्त्यं च' मरणधर्मि । 'अमृतञ्च' तद्विपरीतम् । 'स्थितञ्च'—स्थास्नु परिच्छिन्नमिति यावत् । 'यच्च'—यति व्याप्नोतीति यत् 'अपरिच्छिन्नं' स्थितविपरीतम् । 'सच्च' प्रत्यक्षेणोपलभ्यमानत्वात्सद्रूपमसत् । 'त्यच्च'—त्यत् तद्विपरीतम् । 'त्यत्' इत्येव सर्वदा परोक्षाभिधानार्हम् ॥ १ ॥

( सोऽथा ) अथामूर्त्तम् । ( म्वा ) वायुश्चान्तरिक्षञ्चैतदमृतमेतद्य-देतत्त्यम् ॥ ४ ॥

( त्यन्तु ) तस्यैतस्यामूर्त्तस्य । ( स्यै ) एतस्यामृतस्यैतस्य यतऽएतस्य त्यस्यैष रसो यऽएषऽएतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रसऽइत्यधि-देवतम् ॥ ५ ॥

( स्र ) अथाध्यात्मम् । ( मि ) इदमेव मूर्त्तं यदन्यत्प्राणाच्च यश्चायम-न्तरात्मन्नाकाशऽएतन्मर्त्यमेतत्स्थितमेतत्सत् ॥ ६ ॥

( स्त ) तस्यैतस्य मूर्त्तस्य । ( स्यै ) एतस्य मर्त्यस्यैतस्य स्थितस्यै-तस्य सतऽएष रसो यच्चक्षुः सतो ह्येष रसः ॥ ७ ॥

( सोऽथा ) अथामूर्त्तम् । ( म्पा ) प्राणश्च यश्चायमन्तराऽऽत्मन्नाकाशऽ एतदमृतमेतद्यदेतत्त्यम् ॥ ८ ॥

---

अथामूर्तम् । वायुश्चांतरिक्षं च । एतत् अमृतम् । एतत् यत् । एतत् त्यम् ॥ ४ ॥

तस्यैतस्यामूर्तस्य, एतस्यामृतस्य, एतस्य यतः, एतस्य त्यस्य एष रसः । य एष एतस्मिन् मंडले पुरुषः । त्यस्य हि एष रसः । इत्यधिदेवतम् ॥ ५ ॥

अथाध्यात्मम् । इदमेव मूर्तम् । यदन्यत् प्राणाच्च । यश्चायमंतरात्मन्नाकाशः । एतत् मर्त्यम् । एतत् स्थितम् । एतत्सत् ॥ ६ ॥

तस्यैतस्य मूर्तस्य, एतस्य मर्त्यस्य, एतस्य स्थितस्य, एतस्य सतः, एष रसः । यत् चक्षुः । सतो ह्येष रसः ॥ ७ ॥

अथामूर्तम् । प्राणश्च । यश्चायमंतरात्मन्नाकाशः । एतदमृतम् । एतद्यत् । एतत् त्यम् ॥ ८ ॥

---

अथेदानीममूर्तमुच्यते—' वायुश्चान्तरिक्षं च ' यच्चारिशेषेण भूतद्वय—' एतत् ' ' अमूर्तं ' मूर्तविपरीतं ब्रह्मणो रूपम् । शेष पूर्ववत् ॥ ४ ॥

' एतस्य ' अमूर्तादिचतुष्टयविशेषणविशिष्टस्य भूतद्वयस्य ' एष रसः ' । कोऽसौ ? ' य एष ' ' एत-स्मिन् मण्डले पुरुष. ' कारणात्मको हिरण्यगर्भ. प्राण. । तत्र हेतुः, ' हि ' यस्मात् तस्यामूर्तस्य ' एष. ' मण्डलस्थः पुरुषः ' रस. ' पूर्ववत् सारिष्ट. । एतदाधिदैविकस्य कारणात्मकस्य ब्रह्मणो रूपम् । एवमुक्तमाधि-दैविक विभागमुपसंहरति—इत्यधिदैवतमिति ॥ ५ ॥

अथाध्यात्ममिति । अथानन्तर मूर्तामूर्तयोरध्यात्म विभाग उच्यते । तत्र ' इदमेव ' ' मूर्तं ' किं ? ' यत् ' ' प्राणाच्च ' शरीरस्थात् उच्छ्वासात्मकात् वायो. ' यश्चायमंतरात्मन् ' अन्तरे आत्मनि ' आकाशः ' तस्माच्च ' अन्यत् ' शरीरारम्भक भूतत्रय । एतन्मर्त्यमित्यादि पूर्वेण समानम् ॥ ६ ॥

" एतस्य सत एष रस यत् चक्षु· " इति । आध्यात्मिकस्य शरीरारम्भकस्य कार्यस्य ' एष रस· ' सारः । तेन हि सारेण समस्तमिदं शरीरं सारवत् । यथा अधिदैवतमादित्यमण्डलेन ॥ ७ ॥

एवमाध्यात्मिकस्य कार्यात्मकस्य ब्रह्मणो रूप निरूप्य कारणात्मकस्य रूपं निरूपयितुमाह—अथामूर्तमिति ।

सा होवाच मैत्रेयी । यन्मऽइयम्भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथन्तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवताञ्जीवितन्तथैव ते जीवितꣳ स्यादमृतत्वस्य तु नाशाऽस्ति वित्तेनेति ॥ २ ॥

सा होवाच मैत्रेयी । येनाहन्नामृता स्याङ्किमहन्तेन कुर्य्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ३ ॥

स होवाच याज्ञवल्क्यः । प्रिया बतारे नः सती प्रियम्भाषसऽएह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ब्रवीतु भगवानिति ॥ ४ ॥

---

सा होवाच मैत्रेयी । यत् मे इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् । कथं तेनामृता स्यामिति । नेति होवाच याज्ञवल्क्यः । यथैवोपकरणवतां जीवितम् । तथैव ते जीवितं स्यात् । अमृतत्वस्य तु नाशाऽस्ति वित्तेनेति ॥ २ ॥

सा होवाच मैत्रेयी । येनाहं नामृता स्याम् । किमहं तेन कुर्याम् । यदेव भगवान् वेद । तदेव मे ब्रूहीति ॥ ३ ॥

स होवाच याज्ञवल्क्यः । प्रिया बत अरे नः सती प्रियं भाषसे । एहि । आस्स्व । व्याख्यास्यामि ते । व्याचक्षाणस्य तु मे निदिध्यासस्वेति । ब्रवीतु भगवानिति ॥ ४ ॥

---

मति प्रार्थयामीत्यर्थः । किञ्च अन्यत् 'ते' तव 'अनया' द्वितीयया भार्यया 'कात्यायन्या' सह 'अन्त' विच्छेद 'करवाणि' द्रव्यविभाग कृत्वा वित्तेन युवां सविभज्य गमिष्यामीति भावः ॥ १ ॥

'सा' एवमुक्ता 'मैत्रेयी ह उवाच' । 'भगो.' भगवन् ! 'मे' मम 'यत्' यदि 'इय' सर्व-सागरपरिवा 'पृथिवी' 'वित्तेन' धनेन 'पूर्णा स्यात्' । तदा 'कथ ?' किं तेन पृथिवीपूर्णवित्तसाध्येनाग्नि-होत्रादिकर्म्मणा अह 'अमृता' अमरणधर्म्मिणी मुक्ता 'स्या' भवेयम 'इति' प्रश्ने कृते 'नेति' नैव अमृता स्या इत्युत्तरं 'ह' किल 'याज्ञवल्क्य' उवाचोक्तवान् । किं तर्हि वित्तेन भवेदित्यत आह–यथैवेति । 'यथैव' लोके 'उपकरणवता' साधनसम्पत्तियुक्ताना 'जीवित' सुखोपभोगसम्पन्ना कालक्रमण 'तथैव' तद्वदेव 'ते' तव 'जीवित स्यात्' । 'न तु' पुन 'वित्तेन' वित्तसाध्येन कर्म्मणा 'अमृतत्वस्य' मोक्षस्य 'आशा' तृष्णा 'अस्ति' । आशाऽपि न कर्त्तव्येति भाव ॥ २ ॥

'सा' एवमुक्ता 'मैत्रेयी ह' प्रत्युवाच । यद्येव 'येनाहममृता न स्याम्' 'तेन' वित्तेन 'अह किं कुर्याम्' । किंतु 'यदेव' केवलममृतत्वसाधन 'भगवान्' ज्ञानसम्पन्नो भवान् 'वेद' विजानाति । 'तदेव' अमृतत्वसाधन 'मे' मह्यं 'ब्रूहि इति' उपदिशेत्यर्थ. ॥ ३ ॥

एव वित्तसाध्ये अमृतत्वसाधने प्रत्याख्याते स्वाभिप्रायसम्पत्तो तुष्ट. 'स.' 'ह याज्ञवल्क्य उवाच' ।

स होवाच याज्ञवल्क्यः। (ल्क्यो) न वाऽअरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वाऽअरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न वाऽअरे पुत्राणाङ्कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वाऽअरे वित्तस्य कामाय वित्तम्प्रियम्भवत्यात्मनस्तु कामाय वित्तम्प्रियम्भवति न वाऽ अरे ब्रह्मणः कामाय ब्रह्म प्रियम्भवत्यात्मनस्तु कामाय ब्रह्म प्रियम्भवति न वाऽअरे क्षत्रस्य कामाय क्षत्रम्प्रियम्भवत्यात्मनस्तु कामाय क्षत्रम्प्रियम्भवति न वाऽअरे लोकानाङ्कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वाऽअरे देवानाङ्कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति न वाऽअरे भूतानाङ्कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वाऽअरे सर्वस्य कामाय सर्वम्प्रियम्भवत्यात्मनस्तु कामाय सर्वम्प्रियम्भवत्यात्मा वाऽअरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वाऽअरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वम्विदितम् ॥ ५ ॥

---

स होवाच याज्ञवल्क्यः। न वा अरे पत्युः कामाय पतिः प्रियो भवति। आत्मनस्तु कामाय पतिः प्रियो भवति। न वा अरे जायायै कामाय जाया प्रिया भवति। आत्मनस्तु कामाय जाया प्रिया भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवंति। आत्मनस्तु कामाय पुत्राः प्रिया भवंति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति। आत्मनस्तु कामाय वित्तं प्रियं भवति। न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवति। आत्मनस्तु कामाय ब्रह्म प्रियं भवति। न वा अरे

---

'अरे' मैत्रेयि! 'यत' इत्यनुकम्पायाम् 'नः' अस्माकं पूर्वमपि 'प्रिया सती' इष्टा भवती त्वं इदानीमपि 'प्रियमेव भाषसे'। अतएव 'एहि' आगच्छ। 'आस्व' उपविश। यत् ते तव इष्टं अमृतत्वसाधनं आत्मज्ञानं तत् 'व्याख्यास्यामि' कथयिष्यामि। 'व्याचक्षाणस्य' तु व्याख्यानं कुर्वतः 'मे' मम वाक्यानि अर्थतः 'निदिध्यासस्व' निश्चयेन ध्यातुमिच्छेति। याज्ञवल्क्येनैवमुक्ता मैत्रेयी 'ब्रवीतु भगवान्' इति प्रत्युवाचेत्यर्थः ॥ ४ ॥

'स याज्ञवल्क्यः' अमृतत्वसाधनं वैराग्यमुपदिदिक्षुः जायापतिपुत्रादिभ्यः सकाशादमुख्यत्वेन तत्प्रत्यासत्तिविराग-मादावुवाच। 'अरे' मैत्रेयि! 'वै' प्रसिद्धम् एतत्, यत् 'पत्युः' भर्तुः 'कामाय' प्रयोजनाय जायाया-

स यथा दुन्दुभेर्हन्यमानस्य । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ७ ॥

स यथा वीणायै वाद्यमानायै । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा शङ्खस्य ध्मायमानस्य । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ९ ॥

---

स यथा दुंदुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय । दुंदुभेस्तु ग्रहणेन दुंदुभ्याघातस्य वा शब्दो गृहीतः ॥ ७ ॥

स यथा वीणायै वाद्यमानायै न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय । वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा शंखस्य ध्मायमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय । शंखस्य तु ग्रहणेन शंखध्मस्य वा शब्दो गृहीतः ॥ ९ ॥

---

उत्पन्नमुक्तं च । न तत्र पृथगस्तीत्यर्थः । यस्मादात्मनो जायते आत्मन्येव लीयते आत्ममयं च स्थितिकाले एवमात्मव्यतिरिक्तं स्थितौ नास्तीति भावः ॥ ६ ॥

कथं पुनरिदानीमिदं सर्वमात्मैवेति ग्रहीतुं शक्यते इत्याशङ्कायां यद् गृह्यते तत्सदादिसामान्यमाश्रित्य चिन्मात्रानुगमात् सर्वत्र चिन्मात्रमेवेति गम्यते । यत्स्वरूपव्यतिरेकेण यस्याग्रहणं तस्य तदात्मकत्वमेवेति व्याप्तौ दृष्टान्तत्रयमाह—स यथा दुन्दुभेः इति । 'स' इति दृष्टान्त । यथा लोके 'दुन्दुभेः' भेर्यादेर्हन्यमानस्य दण्डादिना ताड्यमानस्य 'बाह्यान्' बहिर्भूतान् शब्दान् शब्दविशेषान् दुन्दुभिशब्दसामान्यान्निष्कृष्टान् दुन्दुभिशब्दविशेषान् ध्वनीभावादीन् 'ग्रहणाय' ग्रहीतुं न शक्नुयात् न समर्थो भवेत् । कथं तर्हि दुन्दुभिशब्दविशेषाणां ग्रहणमित्यत आह—दुन्दुभेस्त्विति । 'दुन्दुभेस्तु' दुन्दुभिशब्दसामान्यस्य ग्रहणेन तु 'दुन्दुभ्याघातस्य वा' दुन्दुभेराहननमाघातः तस्य दुन्दुभ्याघातविशिष्टस्य शब्दसामान्यस्य 'ग्रहणेन तु' दुन्दुभिशब्दविशेषो गृहीतः स्यात् । यथा एव शब्दविशेषाः शब्दसामान्यान्नातिरिच्यन्ते । तथा स्फुरणात्मब्रह्मसामान्यात् स्फुर्यमाणाः पदार्था नातिरिच्यन्त इत्यर्थः ॥ ७ ॥

तथा 'स यथा वीणायै वाद्यमानायै' इति । वीणाया वाद्यमानाया इत्यर्थः । षष्ठ्यर्थे चतुर्थी । समानमन्यत् ॥ ८ ॥

तथा 'स यथा शङ्खस्य ध्मायमानस्य' शब्देन संयोज्यमानस्यापूर्यमाणस्येत्यर्थः 'न बाह्यान्' शब्दान् शक्नुयादित्यनादि पूर्ववत् । अनेकदृष्टान्तोपादानं इह सामान्यबहुत्वस्य ज्ञापनार्थम् । अनेके हि विलक्षणाश्चेतनाचेतनरूपाः सर्वेऽपि पदार्थाः स्थितिकाले प्रज्ञानघनव्याप्त्यैकत्वं गता इति बोधनार्थमित्यर्थः ॥ ९ ॥

स यथाऽऽर्द्रैधाग्नेरभ्याहितस्य । पृथग्धूमा विनिश्चरन्त्येवं वाऽअरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसऽइतिहासः पुराणं विद्याऽउपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निश्वसितानि ॥ १० ॥
स यथा सर्वासामपाँ समुद्रऽएकायनम् । ( मे ) एवँ सर्वेषाँ

---

स यथा आर्द्रैधाग्नेरभ्याहितस्य पृथक् धूमा विनिश्चरन्ति । एवं वा अरे अस्य महतो भूतस्य निश्वसितमेतत् । यत् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्याः उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि । अस्यैवैतानि सर्वाणि निश्वसितानि ॥ १० ॥
स यथा सर्वासामपां समुद्र एकायनम् । एवं सर्वेषां स्पर्शानां त्वगेकायनम् । एवं सर्वेषां

---

एव स्थितिकाले जगतो ब्रह्मैकत्वमवगमय्य उत्पत्तिकालेऽपि तथा ब्रह्मैकत्वमवगमयितुं ... दर्शयितुमाह—स यथेति । 'स' इति दृष्टान्तः । यथा आर्द्रैरेव काष्ठैरिद्धोऽग्निः 'आर्द्रैधाग्निः' तस्मात् 'अभ्याहितस्य' अभितः प्रज्वलितात् पृथक् नानाप्रकारा धूमा विनिश्चरन्ति विनिर्गच्छन्ति । 'अभ्याहितस्य' इति पञ्चम्यर्थे षष्ठी । धूमग्रहणं विस्फुलिङ्गादीनामप्युपलक्षणपरम् । धूमविस्फुलिङ्गादयो विनिर्गच्छन्तीत्यर्थः । तथा ऋग्वेदादिप्रपञ्च उत्पद्यत इत्याह न ब्रह्मणः पृथगस्तीत्यभिप्रेत्य दार्ष्टान्तिकमाह एवं वा इति । यथा अयं दृष्टान्तः । 'एवं वै' एवमेव 'अरे' मैत्रेयि 'अस्य' प्रकृतस्य परमात्मनः 'महतः' अनवच्छिन्नस्य 'भूतस्य' परमार्थस्वभावस्य एतद्वक्ष्यमाणं 'निश्वसितं' अप्रयत्नोत्थितं निश्वासवत् निश्वसितम् । किमेतदित्यत आह—यदृग्वेद इति । 'यत् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः' इति चतुर्विधं मन्त्रजातम् । अथर्वणा अङ्गिरसा च दृष्टा मन्त्राः 'अथर्वाङ्गिरसः' । 'इतिहासः' उर्वशीपुरूरवसोः संवादादिरूपः । यथा—"उर्वशी हाप्सराः"—( श. प. ११ । ५ । १ । १ ) इत्यादि ब्राह्मणमेव । 'पुराणं'—"असद्वा इदमग्र आसीत्"—( श. प. ६ । १ । १ । १ ) इत्यादि । 'विद्या' देवजनविद्या "वेद सोऽयम्"—( श. प. १३ । ४ । ३ । १० ) इत्याद्याः । 'उपनिषदः' "प्रियमित्येनदुपासीत"—( श. प. १४ । ६ । १० । ३ ) इत्याद्याः । 'श्लोकाः' ब्राह्मणप्रभवाः—"तदेते श्लोकाः" ( श. प. बृ. उ. ४।४।११ ) इत्यादयः । 'सूत्राणि' वस्तुसंग्रहवाक्यानि वेदे । यथा—"आत्मेत्येवोपासीत"—( श. प. १४ । ४ । २ । २८ ) इत्येवमादीनि । 'अनुव्याख्यानानि' मन्त्रविवरणानि । 'व्याख्यानानि' अर्थवादाः । अथवा 'अनुव्याख्यानानि' वस्तुसंग्रहवाक्यविवरणानि । यथा—"प्राणा वै सत्यं"—( श. प. १४ । ५ । १ । २३-१४ । ५ । २ । १ ) इति सिद्धान्तस्य व्याख्यानं । 'व्याख्यानानि' "मेध्या हि तपसाऽजनयत्पिता"—( श. प. १४ । ४ । ३ । २१ ) इत्यादीनि मन्त्रविवरणानि । 'एतानि' उक्तानि ऋग्वेदादीनि अष्टविधानि ब्राह्मणानि 'अस्य' ईश्वरस्य 'निश्वसितानि' । तथा च पुरुषबुद्धेः प्रयत्नपूर्वकत्वमन्तरेणैव निश्वासवत् ... यतः पुरुषबुद्धिर्न ... अत एव—"इदं सर्वं यदयमात्मेति" ... कारणनिरासार्थं वा अस्याः श्रुतेः प्रवृत्तिरिति भावः ॥ १० ॥

अथ प्रलयकालेऽपि अस्य प्रपञ्चस्य ब्रह्मण्येव ... इति दर्शयितुमाह—स यथा सर्वासामपा-

स्पर्शानान्त्वगेकायनमेवꣳ सर्वेषाङ्गन्धानां नासिकेऽएकायनमेवꣳ सर्वेषाꣳ रसानाञ्जिह्वैकायनमेवꣳ सर्वेषाꣳ रूपाणाञ्चक्षुरेकायनमेवꣳ सर्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्वेषाꣳ सङ्कल्पानाम्मनऽएकायनमेवꣳ सर्वेषाम्वेदानाꣳ हृदयमेकायनमेवꣳ सर्वेषाङ्कर्मणाꣳ हस्तावेकायनमेवꣳ सर्वेषामध्वनाम्पादावेकायनमेवꣳ सर्वेषामानन्दानामुपस्थऽएकायनमेवꣳ सर्वेषाम्विसर्गाणाम्पायुरेकायनमेवꣳ सर्वासाम्विद्यानाम्वागेकायनम् ॥ ११ ॥

(५ꣳ) स यथा सैन्धवखिल्यः। (ऽ) उदके प्रास्तऽउदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्याद्यतोयतस्त्वाददीत लवणमेवैवम्वाऽअरऽइदम्महद्भूतमनन्तमपारम्विज्ञानघनऽ एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥

---

गंधानां नासिके एकायनम् । एवं सर्वेषां रसानां जिह्वैकायनम् । एवं सर्वेषां रूपाणां चक्षुरेकायनम् । एवं सर्वेषां शब्दानां श्रोत्रमेकायनम् । एवं सर्वेषां संकल्पानां मन एकायनम् । एवं सर्वेषां वेदानां हृदयमेकायनम् । एवं सर्वेषामध्वनां पादावेकायनम् । एवं सर्वेषामानंदानामुपस्थ एकायनम् । एवं सर्वेषां विसर्गाणां पायुरेकायनम् । एवं सर्वासां विद्यानां वागेकायनम् ॥ ११ ॥

स यथा सैंधवखिल्य उदके प्रास्त उदकमेवानुविलीयेत । न हास्योद्ग्रहणायेव स्यात् ।

---

मिति । स इति दृष्टान्तः । यथा येन प्रकारेण 'सर्वासां' नदीवापीतडागादिगतानां 'अपां' समुद्रोऽयं उदकसामान्यमेकायनमेकगमनं प्रलयः अविभागप्राप्तिरित्यर्थः । यथाऽयं दृष्टान्तः । 'एवं सर्वेषां स्पर्शानां'—मृदुकठिनादीनां वायवीयानां 'त्वगेकायनं' त्वगिति त्वग्विषयं स्पर्शसामान्यमात्रम् । तथा 'सर्वेषां गन्धानां' पृथिवीविशेषाणां 'नासिके' घ्राणे विषयसामान्यम् । तथा 'सर्वेषां रसानां' अब्विशेषाणां जिह्वेन्द्रियविषयसामान्यम् । तथा 'रूपाणां' तेजोविशेषाणां 'चक्षुः' विषयसामान्यम् । तथा शब्दानामाकाशविशेषाणां 'श्रोत्रं' विषयसामान्यम् । एतान्यपि विषयविशेषसामान्यानि मनोविषये सामान्ये अन्तर्भवन्ति—तथा तद् उच्यते । 'सर्वेषां' मनःपरिच्छिन्नानां 'मनः' विषयसामान्यं संकल्पमात्रमेकायनम् । तस्य संकल्पस्य च अध्यवसायलक्षणदर्शनात् बुद्धिविषयविशेषेषु वेदशब्दवाच्येषु विज्ञानशब्दवाच्येषु च अन्तर्भावं अवगन्तव्यम् । 'सर्वेषां वेदानामिति' सर्वेषां विज्ञानानां 'हृदयं' बुद्धिमात्रं विज्ञानमात्रमेकायनम् । तदपि कारणभूते प्रज्ञानघने ब्रह्मणि लीयत इति बोध्यम् । तथा 'सर्वेषां कर्मणां हस्तावेकायनं' इत्यादिना कर्मेन्द्रियाणां विषयविशेषाणामादानगमनानन्दविसर्गवदनानां च तत्सामान्येषु लयः । तेषां च प्राणे, प्राणस्यापि कारणात्मनि, इत्यभिप्रायेण श्रुत्या उक्तम् इति भावः ॥ ११ ॥

एवं प्रागभिहितदृष्टान्तदर्शनेन सर्वं भूतप्रतिभूतमप्यात्मन्यभिव्यक्तमिति । "इदं सर्वं यदयमात्मा" इ(१)

स होवाच याज्ञवल्क्यः । ( त्वयो ) न वाऽअरेऽहम्मोहम्ब्रवीम्यलम्वाऽअरऽइदम्विज्ञानाय ॥ १४ ॥

यत्र हि द्वैतमिव भवति । तदितरऽइतरम्पश्यति तदितरऽइतरञ्जिघ्रति तदितरऽइतरमभिवदति तदितरऽइतरꣳ शृणोति तदितरऽ इतरम्मनुते तदितरऽइतरम्विजानाति ॥ १५ ॥

यत्र त्वस्य सर्व्वमात्मैवाभूत् । ( स ) तत्केन कम्पश्येत्तत्केन कञ्जिघ्रेत्तत्केन कमभिवदेत्तत्केन कꣳ शृणुयात्तत्केन कम्मन्वीत तत्केन कम्विजानीयाद्येनेदꣳ सर्व्वम्विजानाति तङ्केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥ १६ ॥

इति चतुर्दशे काण्डे चतुर्थप्रपाठके बृहदारण्यकोपनिषदि द्वितीये प्रपाठके चतुर्थं ब्राह्मणम् । १४ ( ४ ) २ । ४ ॥ ( ५ ) २–४ ॥

---

स होवाच याज्ञवल्क्यः । न वा अरे अहं मोहं ब्रवीमि । अलं वा अरे इदं विज्ञानाय ॥ १४ ॥

यत्र हि द्वैतमिव भवति । तदितर इतरं पश्यति । तदितर इतरं जिघ्रति । तदितर इतरमभिवदति । तदितर इतरं शृणोति । तदितर इतरं मनुते । तदितर इतरं विजानाति ॥ १५ ॥

यत्र तु अस्य सर्वमात्मैवाभूत् । तत्केन कं पश्येत् । तत् केन कं जिघ्रेत् । तत् केन कमभिवदेत् ।

---

धर्मेण आचक्षाणः 'भगवान्' पूजावान् 'मा' मां 'अमूमुहत्' मोहहृतवान् । न हि उपग .... दर्शनाभिः .....वति भवति । अत. मृढाऽस्म्यत्रेत्यर्थः ॥ १३ ॥

एवमुक्त 'सः' 'याज्ञवल्क्य.' 'ह' प्रतिवचन 'उवाच' । 'अरे' मैत्रेयि । 'अहं मोहं' न वै ब्रवीमि ' मोहनवाक्य नैव ब्रवीमीत्यर्थः । " न प्रेत्य संज्ञाऽस्ति " इति तु विशेषविज्ञानानामभावस्यैवोक्तत्वात् । 'अरे' मैत्रेयि ! शृणु । यन्महद्भूतमनन्तमपार प्रज्ञानघनमस्य यथा व्याख्यानम् । 'इदमेव विज्ञानाय' विज्ञा. 'अलं' पर्याप्तम् । इति याज्ञवल्क्य उक्तवानित्यर्थः ॥ १४ ॥

अथ एवमुक्त विशेषविज्ञानाभावमन्वयव्यतिरेकाभ्यां दर्शयितुमाह—यत्र हीति । 'यत्र' यस्मिन् अविद्या.... कार्यकारणसंघातोपाधिजनिते विशेषात्मनि खिल्यभावे 'हि' प्रसिद्ध 'द्वैतमिव' परमार्थतोऽद्वैते .... भिन्नमिव आत्मनो वस्त्वन्तर भासमान 'भवति' । तत्र तस्मिन् काले 'इतर.' असौ परमात्मनः ....भूत आत्मा परमार्थचक्षुरादिरहितोऽपि चक्षुरादिप्रतिबिम्बरूपेण चक्षुरादिकरणेन 'इतरं' द्रष्टव्यं रूपादिपदार्थं 'पश्यति' । एवमितरो घ्राता 'इतरम्' घ्रातव्यं जिघ्रति । तथा 'अभिवदति' 'शृणोति' 'मनुते' 'विजानाति' इत्यविद्यावस्थायाम् ॥ १५ ॥

यत्र तु सर्वविद्या अविद्या नाशमुपगमिता, तत्र सर्वमात्मभावात् .... इति व्यतिरेकं दर्शयितुमाह—यत्र त्वस्येति । 'यत्र' यदा विद्या.... 'अस्य' .... 'सर्वं' अनृतनामरूपादिद्वैतं आत्मैव

इयम्पृथिवी । सर्व्वेषाम्भूतानाम्मध्वस्यै पृथिव्यै सर्व्वाणि भूतानि मधु यश्चायमस्याम्पृथिव्यान्तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ १ ॥

---

तत् केन कं शृणुयात् । तत् केन कं मन्वीत । तत् केन कं विजानीयात् । येनेदं सर्वं विजानाति । तं केन विजानीयात् । विज्ञातारम् अरे केन विजानीयात् इति ॥ १६ ॥

मधुब्राह्मणम् ।

इयं पृथिवी सर्वेषां भूतानां मधु । अस्यै पृथिव्यै सर्वाणि भूतानि मधु । यश्चायमस्यां पृथिव्यां तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं शारीरस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मा इदममृतमिदं ब्रह्मेदं सर्वम् ॥ १ ॥

---

प्रतिपादितं यत् 'आत्मैवाभूत्' आत्मैव सर्वम् । 'तत्' तस्यामवस्थायां 'केन' कारणेन 'कं' द्रष्टव्यविषयं 'कः' 'पश्येत्' । तथा—"जिघ्रेदित्यादि विजानीयात्" इत्यन्तं व्याख्येयम् । न कोऽपि केनापि कमपि विजानीयात् । ज्ञातृज्ञानज्ञेयानुपपत्तेः । एवं केवलावस्थायां विशेषविज्ञानाभावम् अन्वयव्यतिरेकाभ्यां प्रतिपाद्य तत्रैव वैमुक्तिकन्याय दर्शनादिक्रियासु साक्षिणो ज्ञानविषयत्वमाह—येनेदमिति । यत्राप्यविद्यावस्थायाम् अन्योऽन्यं पश्यति । तत्रापि 'येन' कूटस्थबोधेन साक्षी लोकः 'सर्वमिदं विजानाति' ; 'तं' साक्षिणं 'केन' करणेन को वा विज्ञाता 'विजानीयात्' । न कश्चिदित्यर्थः । येन चक्षुरादिना लोको जानाति । तस्य विषयग्रहणैकनिष्ठत्वात् न साक्षिणि प्रवर्त्तन्त इति भावः । किं पुनर्वक्तव्यम्, विदिस्वरूपमात्मानमात्मनो ज्ञानाविषयत्वमभिप्रायाह—विज्ञातारमिति । 'अरे' मैत्रेयि 'यः' पुनः केवलः अद्वयः विज्ञाता स विज्ञातैव भवति । तं 'विज्ञातारं' 'केन' करणेन 'विजानीयात्' । न कथमपीति भावः ॥ १६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीरामकृष्णपुत्रस्य परमहंसपरिव्राजकाचार्यस्य
श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गत माध्यन्दिनशाखीयोपनिषद्-
बृहदारण्यकटीकायां वसुदेवप्रकाशिकायां द्वितीयेऽध्याये चतुर्थं मैत्रेयीब्राह्मणं
समाप्तम् ॥ १४ । ( ५ ) २ । ४ ॥

पूर्वं मैत्रेयीब्राह्मणे "इदं सर्वं यदयमात्मा" इति प्रतिज्ञातस्य आत्मन उत्पत्तिस्थितिलयहेतुत्वमुक्त्वा प्रतिज्ञातार्थस्य निगमनार्थं मधुनामकमारभते—इयं पृथिवीति । 'इयं' प्रसिद्धा 'पृथिवी' 'सर्वेषां भूतानां' ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनां 'मधु' कार्यं यथा मधु । यथा एको मधुपुटः अनेकैर्मधुकरैर्निर्वर्तितः एवमियं पृथिवी सर्वभूतनिर्वर्तिता इत्यर्थः । तथा 'अस्यै पृथिव्यै' अस्याः पृथिव्याः 'सर्वाणि भूतानि मधु' कार्यम् । किंच—'अस्यां पृथिव्यां' 'यश्चायं' तेजोमयश्चिन्मात्रप्रकाशात्मकः अमृतमयोऽमरणधर्मा 'पुरुषः' । 'यश्चायमध्यात्मम्' आत्मनि शरीरमधिकृत्य वर्त्तत इति अध्यात्मम् । 'शारीरः' शरीरे भवः । पूर्ववत् 'तेजोमयोऽमृतमयः पुरुषः' सर्वलिङ्गाभिमानी इत्येवं उभयविधोऽपि पुरुषः 'सर्वेषां भूतानां' उपकारकत्वात् कार्यत्वेन

( मि ) इमाऽआपः । सर्व्वेषाम्भूतानाम्मध्वासामपाँ सर्व्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदँ सर्व्वम् ॥ २ ॥

( म ) अयमग्निः । सर्व्वेषाम्भूतानाम्मध्वस्याग्नेः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदँ सर्व्वम् ॥ ३ ॥

( म ) अयमाकाशः । सर्व्वेषाम्भूतानाम्मध्वस्याकाशस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चाय-

---

इमा आपः सर्वेषां भूतानां मधु । आसामपां सर्वाणि भूतानि मधु । यश्चायमास्वप्सु तेजोमय अमृतमयः पुरुषः । यश्चायमध्यात्मं रैतसस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मा इदममृतमिदं ब्रह्मेदं सर्वम् ॥ २ ॥

अयमग्निः सर्वेषां भूतानां मधु । अस्याग्नेः सर्वाणि भूतानि मधु । यश्चायमस्मिन्नग्नौ तेजोमयो ऽमृतमयः पुरुषः । यश्चायमध्यात्मं वाङ्मयस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मा इदममृतमिदं ब्रह्मेदं सर्वम् ॥ ३ ॥

अयमाकाशः सर्वेषां भूतानां मधु । अस्याकाशस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन्नाकाशे

---

' मधु ' । ' सर्वाणि भूतानि ' अस्य कार्यं तेन मधु इति पक्षान्तसामर्थ्यात् व्याख्येयम् । पृथिवी सर्वाणि भूतानि पार्थिव पुरुष शारीरश्च इत्येवमेतच्चतुष्टय एव मधु सर्वभूतकार्यम् । सर्वाणि च भूतानि अस्य पृथिव्यादे कारणम् । अतोऽस्य पृथिव्यादेः परस्परमुपकार्योपकारकभाव । यस्मादेकस्मात्कारणात् एतज्जातं तदेव एक परमात्मतो ब्रह्म । इतरत्कार्यं च आत्मन विकारो नामधेयमात्रम्, इत्याशयेनाह—अयमेवेति । ' अयमेव स ' योऽयं पूर्वं निर्दिष्टः " इदं सर्वं यदयमात्मा " ( ४ ब्रा. क. ६ ) इति प्रतिज्ञात. स आत्मा अयममृतत्वानुविर-मत्वात्मक , नान्यः । इदं चतुष्टयक्तत्वाऽविज्ञानबन्धविषयं ज्ञानं अमृतत्वसाधन इत्येतावदरे खल्वमृतत्वम् " यया ते सर्वाणि कर्म न करिष्यामि " इति अध्यायादौ प्रश्नं ब्रह्म यद्विषया विद्या ब्रह्मविद्या इत्युच्यते । 'इदमेव सर्वं' सर्वमित्यादिना, यस्माद्ब्रह्मणो विज्ञानात् सर्वं भवति । नान्यत् किंचिदस्तीत्यर्थः । एवमन्येऽपि मधुपर्याया व्याख्येयाः ॥ १ ॥

तथा ' आपो मधु ' । ' अध्यात्म रैतस पुरुष. ' रेतसि भवो रैतसः । रेतस्तपा विशेषतोऽवस्थानम् " आपो रेतो भूत्वा शिश्न प्राविशन् " ( ऐ. आ. २–४ ) इति श्रुत्यन्तरात् ॥ २ ॥

तथा ' अग्निर्मधु ' । वाङ्मयो वागभिमानी पुरुषोऽग्निरध्यात्मम् । वाच्यग्निविशेषतोऽवस्थानम् " अग्नि-र्वाग्भूत्वा मुखं प्राविशत् " । ( ऐ. आ. २–४ ) इति श्रुते ॥ ३ ॥

तथा ' आकाशो मधु ' । ' अध्यात्म हृदयाकाश ' हृदयाकाश । " य एषोऽन्तर्हृदय आकाश "– ( श. प. १४–६–१–१५ ) इत्यादिना पूर्वं व्याख्यात ॥ ४ ॥

मध्यात्मꣳ हृदयाकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मे- दममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ४ ॥

(म) अयं वायुः । सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राण- स्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ५ ॥

(म) अयमादित्यः । सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायम- ध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृत- मिदं ब्रह्मेदꣳ सर्वम् ॥ ६ ॥

(म) अयं चन्द्रः । सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिंश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानस-

---

तेजोमयोऽमृतमयः पुरुषः । यश्चायमध्यात्मं हृदयाकाशस्तेजोमयोऽमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ४ ॥

अयं वायुः सर्वेषां भूतानां मधु । अस्य वायोः सर्वाणि भूतानि मधु । यश्चायमस्मिन् वायौ तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं प्राणस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ५ ॥

अयमादित्यः सर्वेषां भूतानां मधु । अस्यादित्यस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन् आदित्ये तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं चाक्षुषस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ६ ॥

अयं चन्द्रः सर्वेषां भूतानां मधु । अस्य चंद्रस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन् चंद्रे

---

तथा 'वायुर्मधु' । 'अध्यात्मं प्राणः' प्राणेन्द्रियम् । "वायुः प्राणो भूत्वा नासिके प्राविशत्" । (ऐ.आ.२-४) इति श्रुत्यन्तरात् । भूतानां शरीरारम्भकत्वेनोपकारकत्वम् , तदन्तर्गतानां तेजोमयादीनां करणत्वेनोपकारकत्वम् ॥ ५ ॥

तथा 'आदित्यो मधु' । 'चाक्षुषः' 'पुरुषोऽध्यात्मम्' । "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्"- (ऐ. आ. २-४) इति श्रुतेः ॥ ६ ॥

तथा 'चन्द्रो मधु' । 'अध्यात्मं मानसश्चन्द्रमाः' । "चन्द्रमा मनो भूत्वा हृदयं प्राविशत्" (ऐ. आ. २।४) इति श्रुतेः ॥ ७ ॥

स्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदथँ सर्व्वम् ॥ ७ ॥

( मि ) इमा दिशः । सर्व्वेषाम्भूतानाम्मध्वासान्दिशाथँ सर्व्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मथँ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदथँ सर्व्वम् ॥ ८ ॥

( मि ) इयम्विद्युत् । ( त्स ) सर्व्वेषाम्भूतानाम्मध्वस्यै विद्युतः सर्व्वाणि भूतानि मधु यश्चायमस्याम्विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मन्तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदथँ सर्व्वम् ॥ ९ ॥

( म ) अयथँ स्तनयित्नुः । सर्व्वेषाम्भूतानाम्मध्वस्य स्तनयित्नोः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्त्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मथँ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदथँ सर्व्वम् ॥ १० ॥

---

तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं मानसस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ७ ॥

इमा दिशः सर्वेषां भूतानां मधु । आसां दिशां सर्वाणि भूतानि मधु । यश्चायमासु दिक्षु तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं श्रौत्रः प्रातिश्रुत्कस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ८ ॥

इयं विद्युत्सर्वेषां भूतानां मधु । अस्य विद्युतः सर्वाणि भूतानि मधु । यश्चायमस्यां विद्युति तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं तैजसस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ९ ॥

अयं स्तनयित्नुः सर्वेषां भूतानां मधु । अस्य स्तनयित्नोः सर्वाणि भूतानि मधु । यश्चाय-

---

तथा 'दिशो मधु'। यद्यपि दिशां श्रोत्रमध्यात्मम् । तथाऽपि शब्दप्रतिश्रवणवेलायां तु विशेषतः सन्निहितो भवति इत्यस्यार्थं प्रातिश्रुत्क इति विशेषणम् । प्रतिश्रुत्कया प्रतिश्रवणवेलायां भवः 'प्रातिश्रुत्कः'। "दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्" ( ऐ. आ. २ । ४ ) इति श्रुतेः ॥ ८ ॥

तथा 'विद्युत्' 'त्वगिन्द्रिय' 'मधु'। तत्रापि भवः 'तैजसः अध्यात्मम्' ॥ ९ ॥

तथा 'स्तनयित्नु' 'पर्जन्य' 'मधु'। शब्दे भवः 'शाब्दः'। यद्यपि अध्यात्म शब्दे भव इति

( म ) अयन्धर्म्मः । सर्व्वेषाम्भूतानाम्मध्वस्य धर्म्मस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्धर्म्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मन्धार्म्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ ११ ॥

( मि ) इदꣳ सत्यम् । (ꣳ) सर्व्वेषाम्भूतानाम्मध्वस्य सत्यस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्त्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ १२ ॥

---

मस्मिन् स्तनयित्नौ तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं शाब्दः सौवरस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १० ॥

अयन्धर्मः सर्वेषां भूतानां मधु । अस्य धर्मस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन् धर्मे तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं धार्मस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ११ ॥

इदं सत्यं सर्वेषां भूतानां मधु । अस्य सत्यस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन् सत्ये तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं सात्यस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १२ ॥

---

ध्युत्पत्त्या शाब्दः पुरुषः । तथाऽपि स्वरे विशेषतो भवतीति ' सौवर. ' इति विशेषणम् । स्वरे भवः सौवरः ॥ १० ॥

सर्वेषां शारीरिणां प्रत्येक स्तनयित्न्वन्ताः पृथिव्यादयो भूतगणा देवतागणाश्च कार्यकारणसंघातात्मना उपकुर्वन्तो मधु भवन्तीत्युक्तम् । ते येन प्रयुक्ताः शारीरिणः सम्बध्यमाना मधुत्वेनोपकुर्वन्ति तत्कारणमिदानीमारभ्यते— अयं धर्म इति । धर्मस्य शास्त्रैकगम्यत्वेन परोक्षत्वात् अयमिति निर्देशानर्हत्वेऽपि पृथिव्यादेर्धर्मकार्यस्य प्रत्यक्षत्वात् कारणस्याभेदमौपचारिकमादाय प्रत्यक्षवदभिधानम् ' अयं धर्म. ' इति व्यपदेशोपपत्तिरिति भावः । " तच्छ्रेयोरूपमत्यसृजत धर्मम् " । ( श. प. ) इत्यादौ व्याख्यातः क्षत्रस्यापि नियन्ता धर्मः पृथिव्यादीनां परिणामहेतुत्वात् जगतो वैचित्र्यहेतुः प्राणिभिरनुष्ठीयमानत्वात् अयमिति प्रत्यक्षेण व्यपदेश्यो धर्मः अनुवर्ण्यते ' मधु ' । स च सामान्यरूपेण विशेषरूपेण च कार्यात्मकः । तत्र पृथिव्यादिषु वर्तमाने धर्मे सामान्यरूपेण तदात्मकत्वमाह—यश्चायमस्मिन् धर्मे इति । कार्यकारणसंघातवर्तिनं तु ' धर्मं ' विशेषरूपेण कार्यकारणसंघातरूपमाह—यश्चायमध्यात्मं धार्म इति । कार्यकारणसंघातवर्तिनि धर्मे भवो धार्मः ॥ ११ ॥

सत्यमपि धर्मवत् द्विविधम् । तत्र सामान्यरूपं पृथिव्यादिषु वर्तमानं सत्यमाह—यश्चायमस्मिन्

( मि ) इदम्मानुषम् । ( ५ँ ) सर्व्वेषाम्भूतानाम्मध्वस्य मानुषस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदᳬ सर्व्वम् ॥ १३ ॥

( म ) अयमात्मा । सर्व्वेषाम्भूतानाम्मध्वस्यात्मनः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदᳬ सर्व्वम् ॥ १४ ॥

( ५ँ ) स वाऽअयमात्मा । सर्व्वेषाम्भूतानामधिपतिः सर्व्वेषाम्भूतानाᳬ

---

इदं मानुषं सर्वेषां भूतानां मधु । अस्य मानुषस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन्मानुषे तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं मानुषस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १३ ॥

अयमात्मा सर्वेषां भूतानां मधु । अस्यात्मनः सर्वाणि भूतानि मधु । यश्चायमस्मिन्नात्मनि तेजोमयः अमृतमयः पुरुषः । यश्चायमात्मा तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १४ ॥

स वा अयमात्मा सर्वेषां भूतानामधिपतिः । सर्वेषां भूतानां राजा । तद्यथा रथनाभौ च रथ-

---

सत्ये इति । विशेषस्य तु सत्यभावत्वेनानुगतमित्याह—यश्चायमध्यात्मं सात्य इति । सत्ये भव. सात्य. ॥ १२ ॥

धर्मसाम्या प्रयुक्तोऽयं कार्यकारणसङ्घातविशेषो येन जातिविशेषेण संयुक्तो भवति तं निर्दिशति—इदं मानुषमिति । तत्र मानुषादिजातिविशिष्टा एव सर्वे प्राणिनिकायाः परस्परोपकार्योपकारकभावेन वर्तमाना दृश्यन्ते । अतो मानुषादिजातिरपि ' सर्वेषां भूतानां मधु ' । यद्यपि मानुषादिर्जातिरेकैव, तथापि निर्दिष्टः स्वशरीरनिविष्टा जातिराध्यात्मिकी । शरीरान्तरस्थिता तु बाह्या इत्यभिप्रेत्य तद्विशिष्टं पुरुषं निर्दिशति—यश्चायमस्मिन्मानुषे इति । निर्दिष्टः स्वशरीरनिष्ठा तु आध्यात्मिकी इति तद्विशिष्टं निर्दिशति—यश्चायमध्यात्मं मानुष इति ॥ १३ ॥

यः पुनर्मानुषादिजातिविशिष्टः कार्यकारणसङ्घातः तस्य मधुत्वमाह—अयमात्मेति । ' अयमात्मा ' एतज्जातिविशिष्टो देह. न तु चेतन । ' सर्वेषां भूतानां मधु ' । यश्चायमस्मिन्नात्मनि ' तेजोमयोऽमृतमयः पुरुषः ' । ' स. ' मूर्तामूर्तरसत्वेनान्तो निर्दिश्यते । अध्यात्मविशेषाभावाद्ध्यात्म स न निर्दिश्यते, इत्यभिप्रेत्याह—यश्चायमात्मेति । यस्तु परिशिष्टो विज्ञानमयो यदर्थोऽयं देहलिङ्गसङ्घात आत्मा । ' स यश्चायमात्मा ' इत्युच्यते । ' तेजोमयोऽमृतमयः पुरुषः ' इति पूर्ववत् ॥ १४ ॥

अस्यात्मनस्सर्वात्मत्वमस्यात्मन स्वरूपमाह—स वा अयमात्मेति । यस्मिन्नात्मनि सिन्धुव्यातरवमा प्रवेशित ,

राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवा-
स्मिन्नात्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि
सर्वऽएतऽआत्मानः समर्पिताः ॥ १५ ॥

(ऽ) इदम्वै तन्मधु । दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्य-
न्नवोचत् । तद्वान्नरा सनये दंसऽउग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् ।
दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥ १६ ॥

---

नेमौ च अराः सर्वे समर्पिताः । एवमेव अस्मिन् आत्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्वे एते आत्मानः समर्पिताः ॥ १५ ॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् "तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच" इति ॥ १६ ॥

(ती) इदम्वै तन्मधु । दध्यङ्ङाथर्व्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् । आथर्व्वणायाश्विना दधीचेऽश्व्यꣳ शिरः प्रत्यैरयतम् । स वाम्मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यम्वामिति ॥ १७ ॥

(ती) इदम्वै तन्मधु । दध्यङ्ङाथर्व्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् । पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुषऽआविशदिति स वाऽअयम्पुरुषः सर्व्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतन्नैनेन किञ्चनासम्वृतम् ॥ १८ ॥

---

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत्–" आथर्वणायाश्विना दधीचे अश्व्यं शिरः प्रत्यैरयतम् । स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वाम् "–इति ॥ १७ ॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतद् ऋषिः पश्यन्नवोचत्–" पुरश्चक्रे

---

मुदक प्रवर्ग्येण सर्वत्र प्रकटीकरोमि ' तद्वत् ' । अत्र नकार इवार्थः । " नेति प्रतिषेधार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते " ( निरु० १।४।१०। ) इति यास्कोक्तेः । " अश्व न त्वा वारवन्त " ( निरु० १।४।१०। ) इतिवत् ज्ञेयः । तत् किं कर्म ? ' ह ' इति प्रसिद्धौ । ' आथर्वणः ' अथर्वपुत्रः–'दध्यङ्' एतन्नामा मुनिः ' यत् ' यदा ' अश्वस्य ' हयस्य ' शीर्ष्णा ' युष्मत्सामर्थ्यप्रतिहितेन शिरसा ' वां ' युवाभ्यां यद् मधु यमौ मधुविद्या ' प्रप्रोवाच ' प्रोक्तवान् तदानीं आश्वस्य शिरसः सन्धानलक्षणं पुनर्मानुषस्य शिरसः प्रतिधानलक्षणं च यत् भवदीयं क्रूरं कर्म ' तत् ' ' आविष्कृणोमि ' इति मन्त्रः ॥ १६ ॥

आविष्कृणोमीति प्रतिज्ञाते क्रूरकर्ममधुनी के ते इत्यपेक्षायाम्–' इदं वै ' तन्मधु इत्यादि उक्तार्थमेव ब्राह्मणस्यानुवादपूर्वकं मन्त्रान्तरमाह–आथर्वणायेति । ( ऋ० सं० ।१।११७।२२। ) हे अश्विनौ ! युवां ' आथर्वणाय ' अथर्वणः पुत्राय–' दधीचे ' दध्यङ्नाम्ने महर्षये अश्व्यं अश्वसम्बन्धि शिरो मस्तकं ' प्रत्यैरयतं ' प्रत्यधत्त तदीयं मानुषं शिरः प्रच्छिद्यान्यत्र निधाय अश्व्येन शिरसा तन्मूर्ध्नि समयोजयतमित्यर्थः । ' सः ' महर्षिः ' वां ' युवाभ्यां ' मधुविद्यां ' ' प्रवोचत् ' प्रावोचत्प्रोक्तवान् । स किं इत्येवं जीवितसन्देहमगणय्य स्वशिरश्छेदपूर्वकं अश्व्यशिरसा मधु उक्तवान् इत्यत आह–ऋतायन्निति । युवाभ्यां प्रवर्ग्यविद्यां मधुविद्यां च वक्ष्यामि इति पुरा कृतां प्रतिज्ञां सत्यां कुर्वन् परिपालयितुमिच्छन् जीवितादपि हि सत्यधर्मपरिपालना गुरुतरा इत्येतस्य चिह्नमेतत् । किं तन्मधु इत्यत आह–त्वाष्ट्रमिति । त्वष्टा आदित्यः तस्य सम्बन्धि त्वाष्ट्रं " तद्यद्विदित्वा प्राणास्तत्पनिष्वाप्रवादित्योऽभवन् " ( श० १४।१।१।१०। ) इति । तत्प्रतिसन्धानार्थं प्रावर्ग्यं कर्म तत्र प्रावर्ग्यं कर्माङ्गभूतं परिज्ञानं सत् ' त्वाष्ट्रं ' मधु एव ' प्रावोचत् ' अपि तु पञ्चकक्ष्यं गोप्यं ' रहस्यं ' परमात्मसम्बन्धि विज्ञानं मधु मधुब्राह्मणेनोक्तमध्यात्मप्रकाशिनं तत् ' वां ' युवाभ्यां प्रवोचदित्यनुवर्तनं इत्यर्थः ॥ १७ ॥

प्रवार्यकर्मार्थयोः प्रथमद्वितीययोरध्याययोरर्थः प्रवर्ग्यस्तत्र्याख्यातिकोऽतद्धन्यां मन्त्राभ्यां प्रकाशितः ।

(मि) इदं वै तन्मधु । दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् । रूपꣳ रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥ १९ ॥

---

द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशत् "-इति । स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः । न एनेन किंचन अनावृतम् । न एनेन किंचन असंवृतम् ॥ १८ ॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतत् ऋषिः पश्यन् अवोचत् । " रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश "-इति । अयं वै हरयः । अयं वै दश च सहस्राणि बहूनि चानंतानि च । तदेतत् ब्रह्म अपूर्वमनपरमनंतरमबाह्यम् । अयमात्मा ब्रह्म सर्वानुभूः । इत्यनुशासनम् ॥ १९ ॥

---

इदानीं ब्रह्मविद्याऽर्थयोस्तु तृतीयचतुर्थाध्याययोरर्थं उत्तराभ्यां ऋग्भ्यां प्रकाशयितव्य इत्यत "इदं वै तत्" उक्तार्थं ब्राह्मणमनूद्य प्रवर्तते-पुरश्चक्रे इति । प्रकरणबलात् ईश्वरो अव्याकृते नामरूपे व्याकुर्वाणो भूतादिसर्गपुरःसरं पञ्चीकृतेभ्यो भूतेभ्यो भूरादीन् लोकान् सृष्ट्वा-' पुरः ' पुराणि शरीराणि-' द्विपदः ' द्विपादुपलक्षितानि मनुष्यशरीराणि ' चक्रे ' कृतवान् । तथा ' चतुष्पदः ' चतुष्पादुपलक्षितानि ' पुरः ' पशुशरीराणि ' चक्रे ' । एवं शरीराणि नानाविधानि सृष्ट्वा ' सः ' ईश्वरः ' पुरः ' पुरस्तात् आत्मप्रवेशात्पूर्वं ' पक्षी ' लिङ्गशरीरी ' भूत्वा ' ' पुरः ' शरीराणि ' पुरुषः ' पुरुषरूपः सन् ' आविशत् ' प्रविवेश । इतिशब्दो मन्त्रसमाप्तिद्योतकः । कथमात्मनः पुरुषत्वमित्याकाङ्क्षायां श्रुतिस्तत् व्युत्पादयति-स वा अयमिति । ' स वै ' स एव ' अयमात्मा ' सृष्ट्यादिकर्तृतया प्रकृतः ' सर्वासु पूर्षु ' सर्वशरीरेषु पुरि शेते इति व्युत्पत्त्या ' पुरिशयः ' सन् पुरुष इत्युच्यते । नन्वेवं आधाराधेयनिर्देशात् द्वैतापत्तिः स्यादित्यत आह-नैनेनेति । एनेनानेन परमात्मना ' किंचन ' किंचिदपि अनावृतमनाच्छादितं नास्ति । तथा ' एनेन ' ' किंचन ' असंवृतं ' अंतरमनुप्रवेशितं नास्ति । तथा च परमात्मैव अंतर्बहिर्भावेन कार्यकारणरूपेण व्यवस्थितः । न ततोऽन्यत्किंचिदस्तीति ' पुरश्चक्रे ' इति मन्त्रः संक्षेपतः आत्मैकत्वमाचष्टे इत्यर्थः ॥ १८ ॥

" इदं वै तन्मधु ■ " इत्यादि पूर्ववत् । एवं शरीरेषु प्रविष्टः परमात्मा किंरूप इत्यत आह-रूपं रूपमिति । (ऋक् सं. । ६ । ४७ । १८) ' सः ' ईश्वरः-' रूपं रूपं ' उपाधिभेदं देहं देहं प्रति-'प्रतिरूपः' रूपांतरं प्रतिबिंबं ' बभूव ' । ननु-किमर्थमसौ प्रतिबिंबभावं आपद्यते-तत्राह-तदस्येति । ' तत् ' प्रतिबिंबत्वं अस्यात्मनो निरुपाधिकस्य ' रूपं ' स्वरूपं ' प्रतिचक्षणाय ' आत्मस्वरूपप्रतिख्यापनाय शास्त्राचार्यादिभेदेन तत्त्वप्रकाशनायेत्यर्थः । यदि हि नामरूपे न व्याक्रियेते तदा अस्यात्मनो निरुपाधिकं प्रज्ञानघनाख्यं रूपं ■ प्रतिख्यायेत । यदा पुनः कार्यकारणात्मना नामरूपे व्याकृते भवतः तदा अस्य रूपं प्रतिख्यायेत इति भावः ।

(मु) अथ वꣳशः । (स्तु) तदिदं वयꣳ शौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्याच्च पाराशर्यः साङ्कृत्याच्च भारद्वाजाच्च भारद्वाज औदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो वैजवापाच्च गौतमाच्च गौतमो वैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकाच्चात्रेयाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च ॥ २० ॥

---

अथ वंशः—तदिदं १ वयं शौर्पणाय्यात् । २ शौर्पणाय्यो गौतमात् । ३ गौतमो वात्स्यात् । ४ वात्स्यो वात्स्याच्च पाराशर्याच्च । ५ पाराशर्यः साङ्कृत्याच्च भारद्वाजाच्च । ६ भारद्वाज औदवाहेश्च शाण्डिल्याच्च । ७ शाण्डिल्यो वैजवापाच्च गौतमाच्च । ८ गौतमो वैजवापायनाच्च वैष्टपुरेयाच्च । ९ वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च । १० रौहिणायनः शौनकाच्च आत्रेयाच्च रैभ्याच्च । ११ रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च । १२ कौण्डिन्यायनः कौण्डिन्यात् । १३ कौण्डिन्यः कौण्डिन्यात् ।१४ कौण्डिन्यः कौण्डिन्याच्च आग्निवेश्याच्च ॥ २० ॥

---

'इन्द्रः' परमेश्वरः 'मायाभिः' नामरूपविषयमिथ्याऽभिमानात्मना परिणताभिः 'पुरुरूपः' बहुरूपः 'ईयते' प्रतीयते निःस्पन्द जलसूर्यवत् । मायाभिरिति बहुवचनं विषयाणां बाहुल्यादुपपन्नम् । तथापि परमात्मनो बहुरूपत्वे किं मानं इत्यत आह—युक्ता हीति । रथे युक्ता वाजिन इव 'हि' यस्मात् 'अस्य' प्रतीचो रथस्थानीये शरीरे 'युक्ताः'—'हरयः' इन्द्रियाणि 'शता' शतानि 'दश' च प्राणिभेदबाहुल्यात् शतानि दश च भवन्ति । प्रत्येकं स्वविषयान् प्रतिहरन्तीति हरय इन्द्रियाणि हरयः । इतिशब्दो मन्त्रसमाप्तिद्योतकः । ननु—अत्र हरय इति तत्त्वप्रतीतेः, अयमस्य परमेश्वरः अन्ये हरयः इत्येवं द्वैतापत्तिः इत्यत आह—अयं वा इति । 'अयं वै' अयमेवात्मा 'हरयः' इन्द्रियाद्युपाधियोगात्तथाविभावितत्वात् । 'अयं वै' अयमेवात्मा 'दश च सहस्राणि' 'बहूनि चानन्तानि च' शरीरस्थितानीन्द्रियाणि प्राणिभेदस्यानन्त्यात् । इदानीं अस्यात्मनः पारमार्थिकस्वरूपमाह—तदेतद्ब्रह्मेति । न विद्यते पूर्वं कारणं यस्य तदपूर्वम् । न विद्यते अपरं कार्यं यस्य तदनपरम् । न विद्यते अन्तराले आन्तरं वस्तु यस्य तदनन्तरम् । न विद्यते बाह्यं बहिर्भूतं वस्तु यस्मात् तदबाह्यम् । यत् एतादृशं 'ब्रह्म' तदेवैतत् समस्तं जगत् । न तद्व्यतिरेकेणास्ति । किं पुनः तद्ब्रह्म आत्मनोऽपरं इत्याकाङ्क्षायां नेत्याह—अयमात्मेति । 'अयं' प्रत्यगात्मैव ब्रह्म । कोऽसौ प्रत्यगात्मा तत्राह—सर्वानुभूरिति । यः सर्वात्मना सर्वमनुभवति स 'सर्वानुभूः' । द्रष्टा श्रोता मन्ता विज्ञाता स एव प्रत्यगात्मेत्यर्थः । अयमेव सर्ववेदान्तानामर्थ इत्युपसंहरति—इत्यनुशासनमिति । इतीदं 'अनुशासनं' सर्ववेदान्तोपदेशः । एतदमृतमभयमिति अनर्थनिवृत्तिद्वारा आनन्दावाप्तिरूपं शास्त्रार्थं परिसमाप्तः ॥ १९ ॥

अथेदानीं ब्रह्मविद्यार्थस्य स्तुत्यर्थं मधुकाण्डस्य साध्यायार्थो जगदर्थश्च ब्रह्मविद्याया अयं वंशः आरभ्यते—

(त्रा) आग्निवेश्यः सैनवात् । (त्सै) सैनवः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो वैजवापायनाद्वैजवापायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजऽआत्रेयात् ॥ २१ ॥

(द्वा) आत्रेयो माण्टेः । (म्मा) माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्यऽआङ्गिरसऽआभूतेस्त्वाष्ट्रा-

---

१५ आग्निवेश्यः सैनवात् । १६ सैनवः पाराशर्यात् । १७ पाराशर्यो जातूकर्ण्यात् । १८ जातूकर्ण्यो भारद्वाजात् । १९ भारद्वाजो भारद्वाजाच्च आसुरायणाच्च गौतमाच्च । २० गौतमो भारद्वाजात् । २१ भारद्वाजो वैजवापायनात् । २२ वैजवापायनः कौशिकायनेः । २३ कौशिकायनिर्घृतकौशिकात् । २४ घृतकौशिकः पाराशर्यायणात् । २५ पाराशर्यायणः पाराशर्यात् । २६ पाराशर्यो जातूकर्ण्यात् । २७ जातूकर्ण्यो भारद्वाजात् । २८ भारद्वाजो भारद्वाजाच्च आसुरायणाच्च यास्काच्च । २९ आसुरायणस्त्रैवणेः । ३० त्रैवणिरौपजन्धनेः । ३१ औपजन्धनिरासुरेः । ३२ आसुरिर्भारद्वाजात् । ३३ भारद्वाज आत्रेयात् ॥ २१ ॥

३४ आत्रेयो माण्टेः । ३५ माण्टिर्गौतमात् । ३६ गौतमो गौतमात् । ३७ गौतमो वात्स्यात् । ३८ वात्स्यः शाण्डिल्यात् । ३९ शाण्डिल्यः कैशोर्यात्काप्यात् । ४० कैशोर्यः काप्यः कुमारहारितात् । ४१ कुमारहारितो गालवात् । ४२ गालवो विदर्भीकौण्डिन्यात् । ४३ विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवात् । ४४ वत्सनपात् बाभ्रवः पथः सौभरात् । ४५ पन्थाः सौभरः अयास्यादाङ्गिरसात् । ४६ अयास्य आङ्गिरस आभूतेस्त्वाष्ट्रात् । ४७ आभूतिस्त्वाष्ट्रो विश्व-

---

अथ वंश इति । वंश इव 'वंशः' । यथा वणुर्वंशः पर्वणः पर्वणो भिद्यते । तद्वदग्रात्प्रभृति आमूलप्राप्तेरयं वंशः । अध्यायद्वयस्य आचार्यपरम्पराक्रमो वंश इत्युच्यते । तत्र प्रथमान्तः शिष्यः पञ्चम्यन्त आचार्यो बोद्धव्यः ॥ २० ॥

'आग्निवेश्यः'—'सैनवात्' आचार्यात् अधीतवान् इत्यादि ॥ २१ ॥

'आत्रेयः' माण्टेरधीतवान् । 'परमेष्ठी' विराट् 'ब्रह्मणः' हिरण्यगर्भात् अधीतवान् । 'हिरण्यगर्भः' स्वर-

ड्राभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीचऽ आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात्प्रध्वंसनऽएकर्षेरेकर्षिर्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥२२॥

इति चतुर्दशे काण्डे चतुर्थप्रपाठके बृहदारण्यकोपनिषदि द्वितीये प्रपाठके पञ्चमं ब्राह्मणम् ॥ १४ ( ४ ) २ । ५ ॥ ( ५ ) २–५ ॥

इति पंचमोऽध्यायः ॥ १४–५ ॥ कण्डिकासंख्या ॥ ७८ ॥

बृहदारण्यकोपनिषदि द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

इति बृहदारण्यकोपनिषदध्यायद्वयात्मकं प्रथमं मधुकाण्डं समाप्तम् ।

---

रूपात्त्वाष्ट्रात् । ४८ विश्वरूपस्त्वाष्ट्रोऽश्विभ्याम् । ४९ अश्विनौ दधीच आथर्वणात् । ५० दध्यङ्ङाथर्वणोऽथर्वणो दैवात् । ५१ अथर्वा दैवो मृत्योः प्राध्वंसनात् । ५२ मृत्युः प्राध्वंसनः प्रध्वंसनात् । ५३ प्रध्वंसन एकर्षेः । ५४ एकर्षिर्विप्रजित्तेः । ५५ विप्रजित्तिर्व्यष्टेः । ५६ व्यष्टिः सनारोः । ५७ सनारुः सनातनात् । ५८ सनातनः सनगात् । ५९ सनगः परमेष्ठिनः । ६० परमेष्ठी ब्रह्मणः । ६१ ब्रह्म स्वयंभु । ब्रह्मणे नमः ॥ २२ ॥

---

प्रतिमातवेद. इति तत आचार्यपरपरा नास्ति । यत्पुनर्मेव वेदाख्य तत्स्वयमु नित्य तस्मै ' ब्रह्मणे ' स्वयंभुवे वेदरूपेणावस्थिताय ' नमः ' वाङ्मन कायकृतः प्रह्वीभावो भवत्वित्यर्थः ॥ २२ ॥

इति श्रीहर्षिकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीराधाकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखीयोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां द्वितीयेऽध्याये पञ्चमं मधुब्राह्मणं परिसमाप्तम् ॥ १४ ( ५ ) २–५ ॥

द्वितीयोऽध्यायश्च समाप्तः ॥ १४ ( बृ. उ. ) २ ॥

इति श्रीबृहदारण्यकोपनिषदि आद्यं मधुकाण्डं परिसमाप्तम् ॥

# अथ चतुर्दशे काण्डे बृहदारण्यकोपनिषदि मध्यमं अध्यायं याज्ञवल्क्यकाण्डं वा मुनिकाण्डम् ।

## आदितः षष्ठेऽध्याये बृहदारण्यकोपनिषदि तु तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।

### आदितश्चतुर्थे बृ० आ० द्वितीये च प्रपाठके षष्ठं ब्राह्मणम् ।

---

जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे । तत्र ह कुरुपञ्चालानाम्ब्राह्मणा-ऽअभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषाम्ब्राह्मणानामनूचानतमऽइति ॥ १ ॥

स ह गवाᳯं सहस्रमवरुरोध । दशदश पादाऽएकैकस्याः शृङ्गयोराबद्धा बभूवुस्तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः सऽएता गाऽउदजतामिति ते ह ब्राह्मणा न दधृषुः ॥ २ ॥

---

अश्वलब्राह्मणम् ।

जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे । तत्र ह कुरुपंचालानां ब्राह्मणा अभिसमेता बभूवुः । तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव । कः स्विदेषां ब्राह्मणानामनूचानतम इति ॥ १ ॥

स ह गवां सहस्रमवरुरोध । दशदश पादा एकैकस्याः शृंगयोराबद्धा बभूवुः । तान् होवाच । ब्राह्मणा भगवंतो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति । ते ह ब्राह्मणा न दधृषुः ॥ २ ॥

---

एवं आगमप्रधानेन मधुकाण्डेनोक्तमेवार्थं उपपत्तिभिर्निरूपयितुं याज्ञवल्कीयं काण्डमारभ्यते । तत्र प्रस्तावं कर्तुं विज्ञानस्तुत्यर्थां विद्याप्राप्त्युपायप्रदर्शनार्थां च आख्यायिका अश्वलब्राह्मणेनारभ्यते—जनको ह वैदेह इत्यादिना । विदेहेषु भव ' वैदेह ' ' जनकः ' जनकनामा राजा ' ह ' किल बभूव । स च ' बहुदक्षिणेन यज्ञेन ' शाखान्तरप्रसिद्धेन बहुदक्षिणाविशिष्टेनाश्वमेधेन वा ' ईजे ' अयजत् । ' तत्र ' तस्मिन् यज्ञे ' ह ' विद्वद्बाहुल्येन प्रसिद्धानां ' कुरूणां पञ्चालानां ' च देशानां ' ब्राह्मणाः ' निमन्त्रिता दर्शनकामा वा ' अभिसमेता ' अभिसंगताः ' बभूवुः ' । तत्र महान्तं विद्वत्समुदायं दृष्ट्वा ' ह ' किल ' तस्य जनकस्य वैदेहस्य ' यजमानस्य ' कः स्वित् ' को नु खलु ' एषां ' ब्राह्मणानां मध्ये ' अनूचानतमः ' सर्वे इमे अनूचानाः कः स्विदेषामतिशयेनानूचानोऽनुवचने समर्थो ब्रह्मिष्ठ ' इति विजिज्ञासा ' विशेषेण ज्ञातुमिच्छा ' बभूव ' ॥ १ ॥

पश्चात् ' सः ' जनकः ' ह ' अनूचानविशेषविजिज्ञासुः सन् तद्विज्ञानोपायार्थं ' गवां ' प्रथमवयसां धेनूनां

( ख्रीं ) याज्ञवल्क्येति होवाच । यदिदꣳ सर्व्वमहोरात्राभ्यामाप्तꣳ सर्व्वमहोरात्राभ्यामभिपन्नङ्केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यतऽइत्यध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन चक्षुर्व्वै यज्ञस्याध्वर्युस्तद्यदिदञ्चक्षुः सोऽसावादित्यः सोऽध्वर्युः सा मुक्तिः साऽतिमुक्तिः ॥ ६ ॥

( ख्रीं ) याज्ञवल्क्येति होवाच । यदिदꣳ सर्व्वम्पूर्व्वपक्षापरपक्षाभ्यामाप्तꣳ सर्व्वम्पूर्व्वपक्षापरपक्षाभ्यामभिपन्नङ्केन यजमानः पूर्व्वपक्षापरपक्षयोराप्तिमतिमुच्यतऽइति ब्रह्मणर्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदम्मनः सोऽसौ चन्द्रः स ब्रह्मा सा मुक्तिः साऽतिमुक्तिः ॥७॥

---

याज्ञवल्क्येति होवाच । यदिदं सर्वमहोरात्राभ्यामाप्तम् । सर्वमहोरात्राभ्यामभिपन्नम् । केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इति । अध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन । चक्षुर्वै यज्ञस्याध्वर्युः । तद्यदिदं चक्षुः । सोऽसावादित्यः । सोऽध्वर्युः । सा मुक्तिः । साऽतिमुक्तिः ॥ ६ ॥

याज्ञवल्क्येति होवाच । यदिदं सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तम् । सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नम् । केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत इति । ब्रह्मणर्त्विजा मनसा चंद्रेण । मनो वै यज्ञस्य ब्रह्मा । तद्यदिदं मनः । सोऽसौ चंद्रः । स ब्रह्मा । सा मुक्तिः । साऽतिमुक्तिः ॥ ७ ॥

---

होता । तत्र एव सति ' येय ' यज्ञस्य ' यजमानस्य ' ' वाक् ' सोऽय प्रसिद्धोऽग्निरिदं स एव वागिन्द्रिय-मात्रतोऽग्निर्होता । ' स होता ' अग्निरूपेण दृष्ट ' सा मुक्तिः ' मृत्व्यतिक्रमरूपाया मुक्तेः साधनम् । ' सा ' इत्करूपा मुक्तिरेव ' अतिमुक्तिः ' फलभूताया अग्न्यादिभावापत्तिरूपाया अतिमुक्तेः साधनम् । तथा च आध्यात्मिकात् आधिभौतिकाच्च परिच्छिन्नरूपात् वाग्योरुभयलक्षणात् साधनद्वयात् अपरिच्छिन्नाधिदैवताग्निरूपेण होतरि दृष्टिर्मुक्तिसाधनमित्यर्थः ॥ ९ ॥

स्वाभाविकात् अज्ञानासङ्गप्रयुक्तात् कर्मलक्षणात् मृत्योरतिमुक्तिर्व्याख्याता । तस्य कर्मणः साङ्गस्य मृत्यो-राश्रयभूतानां दर्शपूर्णमासादिकर्मसाधनानां यो विपरिणामहेतुः कालः तस्मात्कालात् पृथगतिमुक्तिर्वक्तव्येती-दमारभ्यते । क्रियानुष्ठानव्यतिरेकेणापि क्रियाया प्रागूर्ध्वं च साधनविपरिणामहेतुत्वेन कालस्य व्यापारदर्श-नात् तस्मात्कालात्पृथगतिमुक्तिर्वक्तव्येति तामाह—यदिदं सर्वमहोरात्राभ्यां व्याप्तमित्यादिना । स च कालो द्विरूपः । अहोरात्रादिलक्षणः तिथ्यादिलक्षणश्च । तत्राहोरात्रादिलक्षणात्तावदतिमुक्तिमाह—' अहो-रात्राभ्यां ' हि सर्वं जायते वर्तते विनश्यति च । तथा यज्ञमानत्वं यज्ञस्य यजमानस्य चक्षुरध्वर्युश्च, ताभ्यां जायते वर्तते विनश्यति चेति भावः । शिष्टान्यक्षराणि पूर्ववत् योज्यानि । यजमानस्य चक्षुरध्वर्युश्चेति साधनद्वयं अध्यात्माधिभूतपरिच्छेदं हित्वा अपरिच्छिन्नाधिदैवतादित्यात्मना दृष्टं सत् मुक्तिः । सा मुक्तिरेवाति-मुक्तिरिति पूर्ववत् । आदित्यव्यवस्थापकत्वस्य हि नाहोरात्रे समवस्थ इत्यर्थः ॥ ६ ॥

इदानीं तिथ्यादिलक्षणात्कालात् अतिमुक्तिरुच्यते । वृद्धिक्षयरहितयोरहोरात्रयोरादित्यः कर्ता । न प्रति-पदादीनां तिथीनां तासां तु वृद्धिक्षयोपगमनेन चंद्रमाः । अत आदित्यात्मना अहोरात्रापत्तिवत् चंद्रात्मना

(स्थां) याज्ञवल्क्येति होवाच । यदिदमन्तरिक्षमनारम्बणमिवाथ केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमतऽइत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै यज्ञस्योद्गाता तद्योऽयम्प्राणः स वायुः सऽउद्गाता सा मुक्तिः साऽतिमुक्तिरित्यतिमोक्षाऽअथ सम्पदः ॥ ८ ॥

(दो) याज्ञवल्क्येति होवाच । कतिभिरयमद्यर्ग्भिर्होताऽस्मिन्यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्रऽइति पुरोऽनुवाक्या च

---

याज्ञवल्क्येति होवाच । यदिदमंतरिक्षमनारंबणमिव । अथ केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमते इति । उद्गात्रर्त्विजा वायुना प्राणेन । प्राणो वै यज्ञस्योद्गाता । तत् यः अयं प्राणः । स वायुः स उद्गाता सा मुक्तिः । साऽतिमुक्तिः । इत्यतिमोक्षाः । अथ संपदः ॥ ८ ॥

याज्ञवल्क्येति होवाच । कतिभिरयमद्य ऋग्भिर्होता अस्मिन् यज्ञे करिष्यतीति । तिसृभिरिति ।

---

पूर्वपक्षापरपक्षात्मय इत्याह—याज्ञवल्क्येति होवाच यदिदं सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तमित्यादिना । 'ब्रह्मणर्त्विजा मनसा चन्द्रेण' इत्यक्षरन्यास । तत्राप्ययम 'यज्ञस्य' यजमानस्य 'यदिदं प्रसिद्ध 'मन.' 'सोऽसौ' चन्द्रोऽधिदैव मन । अध्यात्मं चन्द्रमा अधिदैवतमिति 'हि' प्रसिद्धम् । स एव चन्द्रो ब्रह्मर्त्विक् । तेन यजमानस्य मनो ब्रह्मेति च मानसद्वयमपरिच्छिन्नाधिदैवतचन्द्रात्मना दृष्ट सन्मुक्तिरित्यर्थ ॥ ७ ॥

यजमानस्य कालात्मृत्योरतिमुक्तिर्व्याख्याता । स अतिमुच्यमान केनावष्टम्भेन परिच्छेदविषय मृत्युमतीत्य फल प्राप्नोतीत्यत आह—याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमित्यादिना । 'यदिदं' प्रसिद्धमन्तरिक्षमाकाश अनारम्बणमनालम्बनमिव भासत इति शेष । इवशब्दादस्त्येव तत्रावलम्बन तत्तु न ज्ञायत इत्यभिप्राय । यत्तत् अज्ञायमान आलम्बन तत्केनेति सर्वनाम्ना पृच्छ्यते । अन्यथा फलप्राप्तेरसम्भवात् येनाक्रमणावष्टम्भेन यजमान कर्मफल प्रतिपद्यमान अतिमुच्यते किं तत् इति प्रश्नविषय । 'अथ' केनाक्रमणावष्टम्भेन 'यजमान स्वर्गं लोकमाक्रमते' स्वर्गं लोक फल प्राप्नोति अतिमुच्यत इत्यर्थ. । उद्गात्रर्त्विजा वायुना प्राणेनेति । उद्गाता ऋत्विक् अधिभूत परिच्छिन्न रूपम् । अध्यात्म च प्राण । एतद्द्वयमपरिच्छिन्नेन वायो रूपेण पश्यति । तेन वायुना प्राणेनावलम्बनेन कर्मफल स्वर्गं लोक प्राप्नोति अतिमुच्यत इत्यभिप्राय । "त्वमनुक्त आर्त्विज्यमपि वाय्वात्मना दर्शन कल्प्यमित्यभिप्रेत्योक्तमहर्षिः—इतीति । इतीत्युपसंहारार्थं वचनम् । इत्येव प्रकारान्मृत्योरतिमोक्षा इत्यर्थ । 'अथ सपद ' अथाधुना 'संपदः' उच्यन्ते । संपन्नाम महता फलवताग्निहोत्रादिकर्मणा कर्मत्वादिना सामान्येनाल्पफलेष्वपि कर्मसु विवक्षितफलसिद्धयर्थं सम्पत्तिः संपदुच्यते । यथाशक्त्यग्निहोत्रादिनिर्वर्तनेनाग्निहोत्रादिकर्म मया निर्वर्त्यते इति ध्यान संपदित्यर्थः । यद्वा फलस्यैव देवलोकादेरन्यत्वात्सामान्येनाल्पादाहुतिषु संपादन संपदित्यर्थ । अत संपद आरभ्यते ॥ ८ ॥

संपदामारम्भमुपपाद्य प्रश्नवाक्यमुत्थापयति—याज्ञवल्क्येति होवाच कतिभिरित्यादिना । याज्ञवल्क्येति

याज्या च शस्यैव तृतीया किन्ताभिर्जयतीति पृथिवीलोकमेव पुरोऽनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्यौर्लोकँ शस्यया ॥ ९ ॥

याज्ञवल्क्येति होवाच । कत्ययमद्याध्वर्युरस्मिन्यज्ञऽआहुतीर्होष्यतीति तिस्रऽइति कतमास्तास्तिस्रऽइति या हुताऽउज्ज्वलन्ति या हुताऽअतिनेदन्ति या हुताऽअधिशेरते किन्ताभिर्जयतीति या हुताऽउज्ज्वलन्ति देवलोकमेव ताभिर्जयति दीप्यतऽइव हि देवलोको या हुताऽअतिनेदन्ति मनुष्यलोकमेव ताभिर्जयत्यतीव हि मनुष्यलोको या हुताऽअधिशेरते पितृलोकमेव ताभिर्जयत्यधऽइव हि पितृलोकः ॥ १० ॥

---

कतमास्तास्तिस्र इति । पुरोऽनुवाक्या च याज्या च । शस्यैव तृतीया । किं ताभिर्जयतीति । पृथिवीलोकमेव पुरोऽनुवाक्यया जयति । अन्तरिक्षलोकं याज्यया । द्युलोकं शस्यया ॥ ९ ॥

याज्ञवल्क्येति होवाच । कत्ययमद्याध्वर्युरस्मिन् यज्ञे आहुतीर्होष्यतीति । तिस्र इति । कतमास्तास्तिस्र इति । या हुता उज्ज्वलन्ति । या हुता अतिनेदन्ति । या हुता अधिशेरते । किं ताभिर्जयतीति । या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति । दीप्यत इव हि देवलोकः । या हुता अतिनेदन्ति । मनुष्यलोकमेव ताभिर्जयति । अतीव हि मनुष्यलोकः । या हुता अधिशेरते । पितृलोकमेव ताभिर्जयति । अध इव हि पितृलोकः ॥ १० ॥

---

होत्रावेनाभिमुखीकरणाय । ' कतिभि ' कतिसंख्याभिः ' ऋग्भिः ' ऋग्जातिभिः अयं ' होता ' ' अद्यास्मिन् ' यज्ञे ' ' करिष्यति ' शस्त्रं शंसिष्यति । इत्येवमश्वलेन पृष्टो याज्ञवल्क्य आह–तिसृभिरिति । ' तिसृभिः ' ऋग्जातिभिः । एवमुक्तवन्तं याज्ञवल्क्यं प्रति पुनरश्वलः पृच्छति–कतमास्ता इति । [illegible] विषयोऽयं प्रश्नः । पूर्वस्तु संख्याविषयः । तिसृष्वन्यास्तास्तिस्र ऋग्जातय इति पृष्टे उत्तरमाह–पुरोऽनुवाक्या चेति । प्राक् यागकालात् होत्रा प्रयुज्यमाना ऋग्जातिः पुरोऽनुवाक्या इत्युच्यते । यागार्थं प्रयुज्यमाना ऋग्जातिः याज्या । शस्त्रार्थं प्रयुज्यमाना ऋग्जातिः शस्या । सैव ' तृतीया ' त्रिसंख्यापूरणी । या काश्चन ऋचः स्तोत्रिया वा अन्या वा ताः सर्वाः एतास्वेव तिसृषु ऋग्जातिषु अन्तर्भवन्तीत्यर्थः । एतासां फलं पृच्छति–किं ताभिरिति । ' ताभिः ' पुरोऽनुवाक्यादिभिः ऋग्जातिभिः यजमानः ' किं जयति ' किं फलं प्राप्नुयात् । उत्तरमाह–पृथिवीलोकमेवेति । ' पुरोऽनुवाक्यया पृथिवीलोकमेव जयति ' लोकप्रथमत्वसामान्यात् । ' अन्तरिक्षलोकं याज्यया ' मध्यमत्वसामान्यात् । ' द्यौर्लोकं ' द्युलोकं ' शस्यया जयति ' ऊर्ध्वत्वसामान्यात् ॥ ९ ॥

एवमृग्जातिषु फलसाधने विदिते अध्वर्युकर्तृकाहुतिषु फलसाधनजिज्ञासया पृच्छति–याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्युरित्यादिना । समानार्थकमेतत् । ' या हुता ' समिदाज्याद्याहुतयः ' उज्ज्वलन्ति ' । ' या हुता ' मांसाद्याहुतयोऽतिनेदन्ति अतीव शब्दं कुर्वन्ति । ' या हुता ' पयःसोमाद्याहुतयोऽधिशेरते अधः भूमेरधो गत्वा शेरते । किं ताभिर्जयतीति । ताभिः त्रिप्रकाराभिराहुतिभिः किं जयतीति पृष्टे आह–या हुता उज्ज्वलं-

प्राणऽएव पुरोऽनुवाक्याऽपानो याज्या व्यानः शस्या किन्ताभिर्जयतीति यत्किञ्चेदम्प्राणभृदिति ततो ह होताऽश्वलऽउपरराम ॥ १२ ॥

इति चतुर्दशे काण्डे चतुर्थप्रपाठके बृहदारण्यकोपनिषदि द्वितीये प्रपाठके षष्ठं ब्राह्मणम् ॥ १४ । ( ४ ) २ । ६ ॥ (६) ३-१ ॥

अथ हैनञ्जारत्कारवऽआर्त्तभागः पप्रच्छ । याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहाऽइत्यष्टौ ग्रहाऽअष्टावतिग्रहा ये तेऽष्टौ ग्रहाऽअष्टावतिग्रहाः कतमे तऽइति ॥ १ ॥

---

ध्यात्मम् । कतमास्ताः । या अध्यात्ममिति । प्राण एव पुरोऽनुवाक्या । अपानो याज्या । व्यानः शस्या । किं ताभिर्जयतीति । यत्किंचेदं प्राणभृदिति । ततो ह होता अश्वल उपरराम ॥ १२ ॥

## आर्तभागब्राह्मणं वा जारत्कारवब्राह्मणम् ।

अथ हैनं जारत्कारव आर्तभागः पप्रच्छ । याज्ञवल्क्येति होवाच । कति ग्रहाः कत्यतिग्रहा इति । अष्टौ ग्रहाः । अष्टावतिग्रहाः । ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ॥ १ ॥

---

राम । अधियज्ञ पुरोऽनुवाक्यादयो गीतिरूपेण वर्तमाना अधियज्ञलक्षणा इत्येतदवगतम् । पर ■ केन रूपेण ता पुनरध्यात्म वर्तन्ते इति पृच्छति—कतमास्ता इति । 'या अध्यात्म' स्तोत्रियाः तिस्र ऋचः कास्ता इति पृष्ट उत्तरमाह—प्राण एव पुरोऽनुवाक्येत्यादिना । 'प्राण एव पुरोऽनुवाक्या' प्राणपुरोऽनुवाक्ययोः पकारादिवर्णसामान्यात् । 'अपानो याज्या' अपानयाज्ययोः प्राणपुरोऽनुवाक्ययोः अपानानन्तर्यसामान्यात् । 'व्यानः शस्या' "अप्राणन्ननपानन्नृचमभिव्याहरेत्" इति श्रुत्यन्तरे शस्त्रप्रयोगस्य प्राणापानव्यापारव्यतिरेकेण सिद्धत्वात् व्यानः शस्येति भाव । एवं प्राणादिषु पुरोऽनुवाक्यादिदृष्टिकरणस्य फलं पृच्छति—किं ताभिर्जयतीति । तत्र उत्तरमाह—यत्किंचेदं प्राणभृदिति । प्राणभृत्प्राणिजातं यत्किंचेदमस्ति तत्सर्वं 'जयति' । स्वप्राणस्य सर्वप्राणिशरीरव्यापकत्वसामान्यात् । पूर्वं विशेषेण उक्तस्य सामान्येन उक्तिरियम् । 'ततो ह' तस्मात्प्रश्नात् प्रतिनिर्णयात् असावश्वलः 'होता' नायमस्मद्गोचर इत्यभिप्रायेणोपरराम ॥ १२ ॥

इति श्रीहरीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां मध्यमे मुनिकाण्डे याज्ञवल्क्यकाण्डे वा तृतीयेऽध्याये प्रथमम् अश्वलब्राह्मणं परिसमाप्तम् ( ॥ १४ । ( ६ ) । ३ । १ ॥ )

एवं कालरूपमृत्योः कर्मकरणाभ्यां मृत्योरतिमुक्तिर्व्याख्याता । इदानीं वेदज्ञानं विना तयो विवेकायोगात् मुमुक्षोः सप्रयोजकबन्धज्ञानार्थं येन ग्रहातिग्रहलक्षणात् बन्धान्मृत्योरतिमुक्तिं वक्तुमाख्यायिकामनुसरन् आर्तभागब्राह्मणमारभ्यते—अथ हैनं जारत्कारवऽ आर्तभाग इति । 'ह' शब्द ऐतिह्यार्थः । अथानन्तरं अश्वले उपरते 'एनं'

प्राणो वै ग्रहः । सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धाञ्जिघ्रति ॥ २ ॥
जिह्वा वै ग्रहः । स रसेनातिग्रहेण गृहीतो जिह्वया हि रसान्विजानाति ॥ ३ ॥
वाग्वै ग्रहः । स नाम्नाऽतिग्रहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ४ ॥
चक्षुर्वै ग्रहः । स रूपेणातिग्रहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥
श्रोत्रं वै ग्रहः । स शब्देनातिग्रहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति ॥ ६ ॥

---

प्राणो वै ग्रहः । सोऽपानेनातिग्रहेण गृहीतः । अपानेन हि गंधान् जिघ्रति ॥ २ ॥
जिह्वा वै ग्रहः । स रसेनातिग्रहेण गृहीतः । जिह्वया हि रसान् विजानाति ॥ ३ ॥
वाग्वै ग्रहः । स नाम्नाऽतिग्रहेण गृहीतः । वाचा हि नामान्यभिवदति ॥ ४ ॥
चक्षुर्वै ग्रहः । स रूपेणातिग्रहेण गृहीतः । चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥
श्रोत्रं वै ग्रहः । स शब्देनातिग्रहेण गृहीतः । श्रोत्रेण हि शब्दान् शृणोति ॥ ६ ॥

---

प्रकृतं याज्ञवल्क्यं जरत्कारुगोत्र 'जारत्कारव' आर्तभागाख्य ऋषिरार्तभागः पप्रच्छ । याज्ञवल्क्येति होवाचेत्यभिमुखीकरणाय पूर्ववत् । कति ग्रहाः कत्यतिग्रहा इति । इतिशब्दो वाक्यपरिसमाप्त्यर्थः । मुक्त्यतिमुक्तिप्रतियोगित्वेन सामान्येन प्रसिद्धा 'ग्रहाः' 'कति' कतिसंख्याकाः, अतिग्रहाश्च कतिसंख्याकाः ? इति संख्याविषयोऽयं प्रश्नः । एवं पृष्टे उत्तरमाह—अष्टौ ग्रहा अष्टावतिग्रहा इति । तत्र संख्येयान् पृच्छति 'ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः' व्याख्याताः 'ते कतमे' के ? इत्यर्थः ॥ १ ॥

एवं पृष्टे उत्तरमाह—प्राणो वै ग्रह इति । 'प्राण' इति घ्राणमुच्यते प्रकरणात् वायुना सहितं स घ्राणाख्यः प्राणो ग्रहः बन्धनहेतुत्वात् ग्रहः । 'स अपानेन' गन्धेनातिग्रहेण 'गृहीतः' । अपश्वासोऽपानशब्दार्थः । अपानमचिरात् यदपानो गन्ध उच्यते । कथं ? तेन गृहीत इत्यत आह—अपानेन हीति । 'हि' यस्मात् अपानेनान्तर्मुखश्वासेन 'गन्धान् लोको जिघ्रति' । अपानानुगतं गन्धं घ्राणेन सर्वो लोको जिघ्रति इत्यतस्तेन प्राणो गृहीत इत्यर्थः ॥ २ ॥

'जिह्वा वै ग्रहः' । स जिह्वाख्यो ग्रहः 'रसेनातिग्रहेण गृहीतः' । जिह्वया ह्यन्नं हि रसं सर्वो लोको रसयति । तदेतदुच्यते—जिह्वया हि रसान् विजानातीति ॥ ३ ॥

'वाग्वै ग्रहः' । अध्यात्मपरिच्छिन्नाऽऽत्मगतविषयाभ्यदया असत्यानृतासभ्यबीभत्सादिवचनेषु व्यापृतया हि वाचा लोको गृहीतोऽस्ति । तेन 'वाक् ग्रहः' । ग्रह इव ग्रहः । स वागाख्यो ग्रहः 'नाम्ना' वक्तव्येन विषयेणातिग्रहेण 'गृहीतः' । वक्तव्यासङ्गेन हि प्रयुक्ता वाक् सर्वानर्थैर्युज्यत इति प्रसिद्धमित्यभिप्रेत्याह—वाचा हीति । 'हि' यस्मात् लोको नाम वक्तव्यार्थया 'वाचा' 'नामान्यभिवदति' ॥ ४ ॥

'चक्षुर्ग्रहः' 'रूपमतिग्रहः' ॥ ५ ॥

'श्रोत्रं ग्रहः' 'शब्दोऽतिग्रहः' ॥ ६ ॥

मनो वै ग्रहः । स कामेनातिग्राहेण गृहीतो मनसा हि कामान्कामयते ॥ ७ ॥

हस्तौ वै ग्रहः । स कर्मणाऽतिग्राहेण गृहीतो हस्ताभ्याꣳ हि कर्म करोति ॥ ८ ॥

त्वग्वै ग्रहः । स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्यष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

( ० ) याज्ञवल्क्येति होवाच । यदिदꣳ सर्वम्मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति ॥ १० ॥

---

मनो वै ग्रहः । स कामेनातिग्राहेण गृहीतः । मनसा हि कामान् कामयते ॥ ७ ॥

हस्तौ वै ग्रहः । स कर्मणाऽतिग्राहेण गृहीतः । हस्ताभ्यां हि कर्म करोति ॥ ८ ॥

त्वग्वै ग्रहः । स स्पर्शेनातिग्राहेण गृहीतः । त्वचा हि स्पर्शान् वेदयते । इत्यष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

याज्ञवल्क्येति होवाच । यदिदं सर्वं मृत्योरन्नम् । कास्वित्सा देवता । यस्या मृत्युरन्नमिति अग्निर्वै मृत्युः । सोऽपामन्नम् । अप पुनर्मृत्युं जयति ॥ १० ॥

---

' मनो ग्रह ' ' कामोऽतिग्रह ' ॥ ७ ॥

' हस्तौ ग्रह ' ' कर्माऽतिग्रह ' ॥ ८ ॥

' त्वग्ग्रह ' ' स्पर्शोऽतिग्रह ' इत्येव प्राणादयः ... अष्टौ ग्रहा ' ... स्पर्शान्ता ' अष्टावतिग्रहा ' इत्यर्थ ॥ ९ ॥

... महानिर्वं । पुनराह—याज्ञवल्क्येति होवाचेति पूर्ववत् । ' यदिदं ' ... ' सर्वं ' ... ' मृत्योरन्नं ' मृत्युना ग्रहातिग्रहलक्षणेन ग्रस्तम् । ... । कास्वित्सा नु ' सा देवता ' ' यस्या ' देवताया मृत्युरन्नं भवेत् । यदि मृत्योरपि मृत्युं वक्ष्यति मुनिः । ... स्यात् । अपि न वक्ष्यति । ... ग्रहातिग्रहलक्षणान्मृत्योर्मोक्षो नोपपद्यते । ... मृत्युरनिमात्र । ... मृत्योर्मृत्युस्तमुपन्यस्याह—अग्निर्वै मृत्युरिति । ' अग्निर्वै ' प्रसिद्ध ' मृत्यु ' सर्वविनाशकत्वात् सोऽप्यद्भिर्जन्मवत् । ... मृत्योरपि मृत्युर्... । स मृत्योर्मृत्युरिति भाव । तेन सर्वमृत्युना ग्रहातिग्रहलक्षणेन ... । अतो ... सफलो भवतीत्यर्थः । एवमुक्तस्य सर्वमृत्योर्मृत्युज्ञाने फलमित्यत आह—अप पुनरिति । ... सर्वमृत्युना ग्रहातिग्रहलक्षणे मृत्यौ ... सति विद्वान् ' पुनर्मृत्यु ' पुनर्मरणं ' अपजयति ' निराकरोति पुनर्मरणाय न जायत इत्यर्थः ॥ १० ॥

याज्ञवल्क्येति होवाच । यत्रायम्पुरुषो म्रियते किमेनन्न जहातीति नामे-
त्यनन्तं वै नामानन्ता विश्वे देवाऽअनन्तमेव स तेन लोकञ्जयति ॥ ११ ॥
याज्ञवल्क्येति होवाच । यत्रायम्पुरुषो म्रियतऽउदस्मात्प्राणाः क्रामन्त्या
हो३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते सऽउच्छ्वयत्या-
ध्मातो मृतः शेते ॥ १२ ॥
याज्ञवल्क्येति होवाच । यत्रास्य पुरुषस्य मृतस्याग्निम्वागप्येति वात-

---

याज्ञवल्क्येति होवाच । यत्राय पुरुषो म्रियते । किमेनन्न जहातीति । नामेति । अनन्तं वै नाम । अनन्ता विश्वे देवाः । अनन्तमेव स तेन लोकं जयति ॥ ११ ॥

याज्ञवल्क्येति होवाच । यत्रायं पुरुषो म्रियते । उदस्मात्प्राणाः क्रामन्ति आहो३ नेति । नेति होवाच याज्ञवल्क्यः । अत्रैव समवनीयन्ते । स उच्छ्वयति । आध्मातो मृतः शेते ॥ १२ ॥

याज्ञवल्क्येति होवाच । यत्रास्य पुरुषस्य मृतस्य अग्निं वागप्येति । वातं प्राणः । चक्षुरा-

---

एवं परमे महदानेन मुक्तस्य किं प्राणा एव समवनीयन्ते आहोस्वित् सप्रयोजकमपि सर्वम् । अथ प्राणा एव, न सप्रयोजकं सर्वम्, तर्हि प्रयोजके विद्यमाने पुनः प्राणान् प्रसरेत् । अथ सर्वमेव नामकर्मादिकम् । ततो मोक्ष उपपद्यते इत्येवमर्थं उत्तरप्रश्नोऽयम् इत्यभिप्रायवानाह—याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीतीति । 'यत्र' यस्मिन् काले 'पुरुषः' 'विद्वान्' 'म्रियते' । तदैनं किं 'न जहाति' न त्यजतीति । एवं पृष्टे उत्तरमाह—नामेतीति । सर्वमेव जहाति नाममात्रं तु न जहाति । सर्वं समवनीयते । नाम तु न लीयत इत्यर्थः । तत्तु कुत इत्याशङ्क्याह—अनन्तं वै नामेति । आकृतिनित्यत्वान्नित्यं 'वै' प्रसिद्धं नाम श्रुतौ श्रुत इति तत्त्वमस्याप्रसिद्धम् । तदेवाह—अनन्ता इति । 'अनन्ता वै' प्रसिद्धाः 'विश्वे देवाः' । अतः सर्वात्मना नामिन्यात्मनि विश्वान् देवान् अस्मीति दर्शनेनात्मन्येवोपगम्य 'सः' विद्वान् 'तेन' दर्शनेनानन्तमेव लोकं जयतीत्यर्थः ॥ ११ ॥

साक्षात्कारेण जातं विद्वान् म्रियते । न च तस्य प्राणा अपि न समवनीयन्ते । किंतु जीवन्मुक्तत्वेन सर्वदा तिष्ठतीति तन्निराकर्तुमाह—याज्ञवल्क्येति होवाचेति पूर्ववत् । स सामान्यतः कारणस्य सर्वज्ञेन मुना सविज्ञानमात्मज्ञानमुक्तौ नाशिनि सति विद्वानयं पुरुषः 'यत्र' यस्मिन् काले 'म्रियते' । तदा अस्मान्म्रियमाणाद्ब्रह्मविदः सकाशात्प्राणाः प्राणादयो वागादयश्चाविद्या वासनाख्या अन्यथा सप्रयोजनकाः 'उत्क्रामन्ति' ऊर्ध्वं गच्छन्ति 'आहोस्वित्' नेति प्रश्नार्थः । इति पृष्टे 'नेति' नोत्क्रामन्तीति 'होवाच याज्ञवल्क्यः' । किंतु 'अत्रैव' परब्रह्मण्येव ज्ञाता सन्ने अस्मिन् विदुष्येव 'समवनीयन्ते' एकीभावेन सम्यगनुप्रविश्य प्रविलीयन्ते ऊर्मय इव समुद्रे । तर्हि मृतत्वसिद्धिः कथमित्यपेक्षायां तस्या देहविषयत्वम् इत्याह—स उच्छ्वयतीति । उच्छूनतां प्रतिपद्यते । आध्मायति बाह्येन वायुना दृतिवदापूर्यते 'आध्मातः मृतः' निश्चेष्टः 'शेते' अतो देहस्यैव मरणधर्मता । न तु विनाशो मुक्तस्य न कश्चिद्गमनमित्यर्थः ॥ १२ ॥

अथ केन प्रयुक्तः महानिमहल्लक्षण बन्धनमित्येतन्निर्दिधारयिषया पृच्छति—याज्ञवल्क्येति होवाचेति । 'यत्र'

म्प्राणश्चक्षुरादित्यम्मुनश्चन्द्रन्दिशः श्रोत्रम्पृथिवीᳪं शरीरमाकाशमात्मौ-षधीर्लोमानि व्वुनस्पतीन्केशाऽअप्सु लोहितञ्च रेतश्च निधीयते क्वायन्तदा पुरुषो भवतीत्याहर सोम्य हस्तम् ॥ १३ ॥

( ब्रा ) आर्त्तभागेति होवाच । (वायु) आवुमेवैतद्वेदिष्ष्यावो नु नावेतत्सजनऽइति तौ होत्क्रम्य मन्त्रयाञ्चक्रतुस्तौ ह यदूचतुः कर्म्म हैव तदूचतुरथ ह यत्प्रशशᳪंसतुः कर्म्म हैव तत्प्रशशᳪंसतुः पुण्यो वै पुण्येन कर्म्मणा भवति पापः पापेनेति ततो ह जारत्कारवऽआर्त्तभागऽउपरराम ॥ १४ ॥

इति चतुर्दशे काण्डे चतुर्थप्रपाठके बृहदारण्यकोपनिषदि द्वितीय-प्रपाठके सप्तमं ब्राह्मणम् ॥ १४ (४) २ । ७ । (६) ३-२ ॥

इति बृहदारण्यकोपनिषदि द्वितीयः प्रपाठकः समाप्तः ॥ १४-(४) २॥
काण्डिकासंख्या १०४ ॥

---

रादित्यम् । मनश्चन्द्रम् । दिशः श्रोत्रम् । पृथिवीं शरीरम् । आकाशमात्मा । ओषधीर्लोमानि । वनस्पतीन्केशाः । अप्सु लोहितं च रेतश्च निधीयते । क्वायं तदा पुरुषो भवति इति । आहर सौम्य हस्तम् ॥ १३ ॥

आर्तभागेति होवाच । आवमेवैतद्वेदिष्यावः । न नावेतत्सजन इति । तौ होत्क्रम्य मन्त्रयाञ्चक्रतुः । तौ ह यदूचतुः । कर्म हैव तदूचतुः । अथ ह यत्प्रशशंसतुः । कर्म हैव तत्प्रशशंसतुः । पुण्यो वै पुण्येन कर्मणा भवति । पापः पापेनेति । ततो ह जारत्कारव आर्तभाग उपरराम ॥ १४ ॥

---

यस्मिन् समये अस्याविदुष 'पुरुषस्य' शिरःपाण्यादिविशिष्टस्य 'मृतस्य' 'वाक्' वागभिमानी देवता 'अग्निमप्येति' अभिगच्छति । 'प्राण' तदभिमानी देवता प्राण वातमप्येति, चक्षुरादित्यमप्येतीति सर्वत्र सम्बध्यते । 'मनश्चन्द्र, दिशः श्रोत्र, पृथिवी शरीर, आकाशमात्मेति' । अत्रात्मशब्देन आत्माधिष्ठानं हृदयाकाशमुच्यते । स आकाशमप्येति । 'लोमानि' ओषधीरपियन्ति । 'केशाः' वनस्पतीनपियन्ति । 'लोहित' रेतश्चाप्सु 'निधीयते' । इति पुनरादानलिङ्गम् । 'तदा' तस्मिन् काले 'अयं पुरुषः' 'क' कस्मिन् आश्रये भवति । किमाश्रितः कार्यकारणसङ्घातमुपादत्ते, इति पृष्टे उत्तर वक्तुं उपक्रमणमाह—आहरेति । हे सौम्य ! 'हस्त' करं 'आहर' देहीति ॥ १३ ॥

हे आर्तभाग ! इत्यामन्त्र्य 'ह' किल 'उवाच'—आवमिति । आवामेव एकान्ते गत्वा एतस्य त्वत्पृष्टस्य वेदितव्यस्य यत् तत्त्वं तत् 'वेदिष्याव' निरूपयिष्यावः । "प्रथमायाश्च द्विवचने भाषायाम्" (पा.सू.७।२।८८) इत्यत्र भाषायामित्युक्तत्वात् आवमिति छान्दसम् । तत्र हेतुरेवाभावमाह—न नाविति । यस्मात् 'नौ' आवयोरेतद्वस्तु 'सजने न' समुदाये निर्णेतुं न शक्यते । अतोऽनेकवादिविप्रतिपत्तिरहिते एकान्ते गत्वे-

ध्यायौ विचारणायेति शेषः । एवमुक्त्वा यन्निर्गतं तच्छ्रुतिः स्वमुखेनैवाचष्टे—तौ हेति । 'तौ ह' याज्ञवल्क्यार्तभागौ सजनदेशादुत्क्रम्य 'मन्त्रयांचक्रतु' । आदौ लौकिकवादप्रमाणं एकैकं परिगृह्य विचारितवन्ताविर्यर्थः । 'तौ ह' विचार्य सर्वानेव पूर्वपक्षान् स्वभाववादादीन् अपोह्य 'यत्' ऊचतुस्तच्छृणु, 'कर्म' हैवाश्रय पुनः पुनः कार्यकारणोपादानहेतुम्, तत्तत्र विचारावस्थाया एकान्ते स्थित्वा ऊचतुरुक्तवन्तौ । न केवलमूचतुः । 'अथ ह' अपि तु । कालकर्मदैवेश्वरेषु अभ्युपगतेषु हेतुषु यत्प्रशशंसतुः । 'कर्म हैव' 'तत्प्रशशंसतुः' कर्मैव प्रधानं कारणमिति प्रशंसापदोपादितं प्राधान्यमुपसंहरति—पुण्यो वा इति । यस्मादेव महानिमहादिरूपकार्यकारणोपादानं कर्मप्रयुक्तमिति निर्धारितम् । तस्मात् 'पुण्येन' शास्त्रविहितेन 'कर्मणा' देवादिषु जायमानः 'पुण्यः' पुण्यात्मा वै भवति । 'पापेन' शास्त्रनिषिद्धेन 'कर्मणा' स्थावरादिषु जायमानः 'पापः' पापात्मा भवति । 'ततः' एव प्रश्ननिर्णयानन्तरं 'जारत्कारव आर्तभागः' मननाऽपि अधिगतनीयपराजयोऽयमित्यभिप्रायेणोपरराम ॥ १४ ॥

इति श्रीहर्षिकेशाश्रमभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवाश्रमभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां मध्यमे याज्ञवल्क्यकाण्डे वा मुनिकाण्डे तृतीयेऽध्याये द्वितीयमार्तभागब्राह्मणं वा जारत्कारवब्राह्मणं परिसमाप्तम् ॥ १४ ( ६ ) ३—२ ॥



# अथ चतुर्दशे काण्डे पञ्चमप्रपाठके बृहदारण्यकोपनिषदि तृतीयप्रपाठके प्रथमं ब्राह्मणम् ।

## आदितः पञ्च बृ० आ० तृतीयेऽध्याये च तृतीयं ब्राह्मणम् ।



अथ हैनम्भुज्युर्लाह्यायनिः पप्रच्छ । याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्य्यव्रजाम ते पतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्सुधन्वाऽऽङ्गिरसऽइति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिताऽअभवन्क्व पारिक्षिताऽअभवन्निति तत्त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिताऽअभवन्निति ॥ १ ॥

---

भुज्युब्राह्मणम् ।

अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ । याज्ञवल्क्येति होवाच । मद्रेषु चरकाः पर्यव्रजाम । ते पतंचलस्य काप्यस्य गृहानैम । तस्यासीद् दुहिता गंधर्वगृहीता । तमपृच्छाम । कोऽसीति । सोऽब्रवीत् । सुधन्वाऽऽङ्गिरस इति । तं यदा लोकानामन्तानपृच्छाम । अथैनमब्रूम । क्व पारिक्षिता अभवन् । क्व पारिक्षिता अभवन्निति । तत्त्वा पृच्छामि याज्ञवल्क्य । क्व पारिक्षिता अभवन्निति ॥ १ ॥

---

'अथ ह' अनन्तरब्राह्मणान्ते "पुण्यो वै पुण्येन कर्मणा भवति" इति श्रुत्या पुण्यमेव कर्म सर्वपुरुषार्थसाधनमित्युक्तम् । तत्र मोक्षस्यापि पुरुषार्थत्वात् उक्तेन पुण्योत्कर्षेण मोक्षो भविष्यतीत्याशङ्कानिरासार्थं विद्यामयुक्तस्यापि कर्मणो मोक्षासाधकत्वमभावात् मोक्षार्थानि कर्माणि इति कर्मफलानां समाप्तत्वदर्शनायैव भुज्युब्राह्मणमारभ्यते—अथ हैनं भुज्युर्लाह्यायनिरिति । 'अथ' आर्तभागस्योपरमानन्तरं भुज्युरिति नामवान् लह्यस्यापत्यं लाह्य तदपत्यं लाह्यायनिः 'एनं पप्रच्छ' इत्यादि पूर्ववत् । स्वविद्यायाः गुरूपदेशपूर्वकत्वं ख्यापयितुमाख्यायिकामारचयति—मद्रेषु चरका इति । मद्रा नाम जनपदाः । तेषु देशेषु अध्ययनार्थं व्रतचरणाच्चरका विद्यार्थिनः अध्वर्यवो वा 'पर्यव्रजाम' पर्यटितवन्तः । 'ते' वयं 'पतञ्चलस्य काप्यस्य' कपिगोत्रस्य गृहानागतवन्तः प्रविष्टवन्तः । तस्य पतञ्चलस्य 'दुहिता' पुत्रिका 'गन्धर्वगृहीता' गन्धर्वेणामानुषेण केनचित् सत्त्वेन गृहीता आविष्टाभूत् । 'तं' पतञ्चलदुहितर्याविष्टं गन्धर्वं 'कोऽसि' कस्त्वमसि किंनामासीति सर्वे वयमपृच्छाम । 'सः' गन्धर्वः पुनरस्मानब्रवीत् । नामतोऽहं 'सुधन्वा' गोत्रत 'आङ्गिरस' इति । तत्स्वरूपं ज्ञात्वा 'तं' गन्धर्वं प्रति 'यदा' यस्मिन् काले भोजनावसानानन्तरकाले 'अपृच्छाम' । 'अथ' तदा 'एनं' गन्धर्वं प्रति 'पारिक्षिताः' परिक्षितो दुरितं क्षीयते येन स परिक्षित् अश्वमेधः, तद्याजिनः पारिक्षिताः 'क्वाभवन्' क्व गता बभूवुरिति 'अब्रूम' पृष्टवन्तो वयमिति । 'क्व पारिक्षिता अभवन्निति' एवं स च गन्धर्वोऽस्मभ्यमब्रवीत् । तेनैतत् प्रश्नस्य गन्धर्वेण दत्तोत्तरं नोऽहं विद्यमानो याज्ञवल्क्य ! 'क्व

**तद्यथा तृणजलायुका । तृणस्यान्तं गत्वाऽऽत्मानमुपसꣳहरत्येवमेवा-यम्पुरुषऽइदꣳ शरीरन्निहत्याविद्याङ्गमयित्वाऽऽत्मानमुपसꣳहरति ॥ ४ ॥**

**तद्यथा पेशस्कारी । पेशसो मात्रामपादायान्यन्नवतरङ्कल्याणतरꣳ रूपन्तनुतऽएवमेवायम्पुरुषऽइदꣳ शरीरन्निहत्याविद्याङ्गमयित्वाऽन्यन्न-वतरꣳ रूपन्तनुते पित्र्यम्वा गान्धर्वम्वा ब्राह्मम्वा प्राजापत्यम्वा दैवम्वा मानुषम्वाऽन्येभ्यो वा भूतेभ्यः ॥ ५ ॥**

---

तद्यथा तृणजलायुका तृणस्यान्तं गत्वा आत्मानमुपसंहरति । एवमेव अयं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वा आत्मानमुपसंहरति ॥ ४ ॥

तद्यथा पेशस्कारी पेशसो मात्रामपादाय अन्यन्नवतरं कल्याणतरं रूपं तनुते । एवमेव अयं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वा अन्यन्नवतरं रूपं तनुते । पित्र्यं वा । गान्धर्वं वा । ब्राह्मं वा । प्राजापत्यं वा । दैवं वा । मानुषं वा । अन्येभ्यो वा भूतेभ्यः ॥ ५ ॥

---

समन्वारभेते, इति वाक्ययोजना । तस्मादेव विद्याकर्मपूर्वप्रज्ञारूपं त्रयं देहान्तरप्रतिपत्त्युपभोगसाधनम् । तस्मात् विद्याकर्मादि शुभमेव समाचरेत् शुभफलायेति प्रकरणार्थः ॥ ३ ॥

एवं सम्भृतविद्यादिसम्भारो देहान्तरं प्रतिपद्यमानः कथं तत्प्रतिपद्यत इत्यत्र दृष्टान्तमाह—तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽऽत्मानमुपसंहरतीति । तत्र उद्भूतवासनस्य म्रियमाणस्य तया वासनया देहान्तरप्राप्तौ अयं दृष्टान्तः । 'यथा' येन प्रकारेण 'तृणजलायुका' 'तृणस्यान्तम्' अवसानं गत्वा अर्थात्तृणान्तरमाश्रित्य आत्मानमात्मनः पूर्वावयवमुपसंहरति अग्रिमावयवस्थाने इत्यर्थः । दार्ष्टान्तिकमाह—एवमेवायं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वाऽऽत्मानमुपसंहरतीति । यथाऽयं दृष्टान्तः । 'एवमेवायं पुरुषः' यः प्रकृतः संसारी 'इदं शरीरं' पूर्वोपात्तं 'निहत्य' स्वप्नप्रतिपित्सुरिव पातयित्वा 'अविद्यां गमयित्वा' अचेतनं कृत्वा आत्माभिमानत्यागेन प्रसारितया वासनया अर्थाच्छरीरान्तरं गृहीत्वा 'आत्मानमुपसंहरति'। तत्राहमिति आत्मानं प्रतिपद्यते न पूर्वदेहे इत्यर्थः । एतेन एतदपास्तं यद्वदन्ति पौराणिकाः—तृणजलायुकादृष्टान्तात् देहान्तरं गृहीत्वा पूर्वदेहं मुञ्चत्यात्मेति स्थूलदेहविशिष्टस्यैव परलोकगमनमिति । यस्मात् देहनिर्गमनावस्थायामेव यथोक्ता हृदयस्था वासना विद्याकर्मनिमित्तं भाविदेहं स्पृशति । जीवोऽपि तत्राभिमानं करोति । पुनस्तु पूर्वदेहं त्यजतीत्येतस्मिन्नर्थे तृणजलायुकादृष्टान्तः श्रुत्या दर्शितः । तस्मात् पूर्वदेहविशिष्टस्यैव परलोकगमनमिति अयुक्तमिति ॥ ४ ॥

एवं जलायुकावत् वासनयैव शरीरान्तरं गच्छत आत्मनः तदारम्भकाणि पञ्च भूतानीति "तद्यथा राजानं" इत्यादावुक्तम् । तत्र किं नित्योपात्तमेव भूतपञ्चकं पूर्वपूर्वदेहद्वयोपमर्देन अन्यदन्यद्देहमारभते । किं वा अन्यदन्यदेव भूतपञ्चकमन्यमन्यं देहं जनयतीति सन्देहे तत्तद्भूतपञ्चकोत्पत्तावपि कारणान्तरस्य पृथक्त्वात् मायायाः सर्वकारणत्वेऽपि तत्तद्देहारम्भसमये तत्तदुपादानभूतपञ्चकोत्पादकत्वे प्रमाणाभावात् प्रतिदेहारम्भं भूतपञ्चक-

स वा ऽअयमात्मा ब्रह्म । विज्ञानमयो मनोमयो वाङ्मयः प्राणमयश्चक्षुर्म्मयः श्रोत्रमयऽआकाशमयो वायुमयस्तेजोमयऽआपोमयः पृथिवीमयः क्रोधमयोऽक्रोधमयो हर्षमयोऽहर्षमयो धर्म्ममयोऽधर्म्ममयः सर्व्वमयस्तद्यदेतदिदम्मयोऽदोमयऽइति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्म्मणा भवति पापः पापेनेति ॥ ६ ॥

---

स वा अयमात्मा ब्रह्म । विज्ञानमयः । मनोमयः । वाङ्मयः । प्राणमयः । चक्षुर्मयः । श्रोत्रमयः । आकाशमयः । वायुमयः । तेजोमयः । आपोमयः । पृथिवीमयः । क्रोधमयः । अक्रोधमयः । हर्षमयः । अहर्षमयः । धर्ममयः । अधर्ममयः । सर्वमयः । तद्यद् इदंमयः अदोमयः इति । यथाकारी यथाचारी तथा भवति । साधुकारी साधुर्भवति । पापकारी पापो भवति । पुण्यः पुण्येन कर्मणा भवति । पापः पापेनेति ॥ ६ ॥

---

व्यक्तिभेदे मानाभावात् न द्वितीय पक्षः सम्भवतीत्यभिप्रेत्य प्रथमपक्षमेवाङ्गीकारयितुं दृष्टान्तमाह—तद्यथा पेशस्कारीति । तत्र नित्यैकात्मनैव मायामयं भूतजातं प्रतिदेहारम्भ उपादानम् इत्यस्मिन्नर्थे दृष्टान्तः । 'यथा' लोके पेशः सुवर्णं तत्करोतीति 'पेशस्कारी' सुवर्णकारः 'पेशसः' सुवर्णस्य 'मात्रां' पूर्वरचनामपादायापच्छिद्य 'अन्यत्' पूर्वस्माद्रचनाविशेषात् भिन्नं भवादौ नव 'नवतरं' अभिनवतरं कल्याणादपि कल्याणं कल्याणतरमतिशोभनं 'रूपं' 'तनुते' निर्मिनोति इत्यर्थः । दार्ष्टान्तिकमाह—एवमेवायं पुरुषः इदं शरीरं निहत्येत्यादिना । 'रूपं' संस्थानविशेषं देहान्तरम् । अन्यत्तु पूर्ववत् । किं तदारभ्यमाणं शरीरमित्यपेक्षायामाह—पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वेति । पितृभ्यो हितं 'पित्र्यं' पितृलोकोपभोग्यमिति यावत् । एवं तत्तल्लोकोपभोगयोग्यं तत्तन्नामकं व्याख्येयम् । 'ब्राह्मं' हिरण्यगर्भः तल्लोकोपभोगयोग्यं ब्राह्मम् । प्रजापतिर्विराट् तल्लोकोपभोगयोग्यं 'प्राजापत्यं वा' शरीरम् । 'तनुते' इति प्रत्येकमभिसम्बध्यते । देहव्यक्तीनामानन्त्येन प्रत्येकं कथयितुमशक्यत्वात् अनुक्तं सामान्यशब्देन गृह्णाति—अन्येभ्यो वा भूतेभ्य इति । यथाकर्म यथाश्रुतं 'अन्येभ्यो भूतेभ्यः' प्रेतपिशाचादिभ्यः सकाशात् शरीरं तनुते इति सम्बध्यते । तस्मादसंसारदेहसम्बन्धरूप्येव भूतानि शरीरान्तरारम्भकाणि । तदुपाधरस्य संसरणमिति भावः ॥ ५ ॥

योऽयमात्मनः संसारसम्बन्धः स वास्तवो न भवति किं तु—औपाधिक एवेति तदुपाधिनो दर्शयितुं आत्मनो वास्तवस्वरूपमाह—स वा ऽअयमात्मा ब्रह्मेति । 'सः' प्रकृतः संसारी । वैशब्दस्तत्स्मृत्यर्थः । अयमपि स्थितः कार्यविनिर्मुक्तः स्वप्रकाशः अपरोक्षात्मा कूटस्थः साक्षी चिद्रूपः एवंभूतः सोऽयमात्मा 'वै' 'ब्रह्म' अशनायाद्यतीतपरमात्मैव अस्य संसारिणो वास्तवं रूपमित्यर्थः । तथैव सत्यमात्मा अविद्याऽऽवृतः प्रतिपन्नः । पुनः सम्यग्ज्ञानात्तद्ध्वंसे ब्रह्मैवावतिष्ठत इति भावः । इदानीं यदुक्तं एवंविधस्य मनो

न्धः तानुपाधीन् आह—**विज्ञानमयो मनोमयो वाङ्मयः प्राणमय** इति । विज्ञानं बुद्धिः तन्मयः तत्प्रायः । बुद्धर्यैक्याध्यासादि धर्मस्य कर्तृत्वादेः आत्मन्यारोपः । अतस्तत्प्रायः । अस्मिन् प्रकरणे सर्वोऽपि मयट् प्रायार्थः, न तु विकारार्थः । मनसः सन्निकर्षान्मनोमयः । विज्ञानमयत्वं चिन्मयत्वोपलक्षणम् । मनोमयत्वमहंकारमयत्वोपलक्षणमिति द्रष्टव्यम् । वदनव्यापारकाले वाङ्मयः सः । प्राणमयः पञ्चवृत्तिकस्तन्मयस्तत्प्रायः । तथा रूपदर्शनकाले चक्षुर्मयः । शब्दश्रवणकाले श्रोत्रमयः । एतच्च रसनादेः कर्मेन्द्रियाणां चोपलक्षणपरमित्यर्थः । एवं प्राणचक्षुराद्विद्वारेण चक्षुरादिकरणमयः सन्नात्मा शरीरारम्भकभूतमयोऽपि भवतीत्याह—**आकाशमयो वायुमयस्तेजोमय आपोमयः पृथिवीमय** इति । आकाशशरीरारम्भे आकाशमयः । तथा वायव्यशरीरारम्भे वायुमयः । तैजसशरीरारम्भे तेजोमयः । तथा वरुणलोकेषु आप्यशरीरारम्भे आपोमयः । पार्थिवशरीरारम्भे पृथिवीमयः । एवं कार्यकरणसंघातमयः सन्नात्मा तत्राभिव्यज्यमानात्तरात्मवृत्त्युपाधिकश्च भवतीत्याह—**क्रोधमयोऽक्रोधमयो हर्षमयोऽहर्षमय** इति । प्राप्ताप्राप्तवस्त्वन्तरदर्शनेन तद्विषयाभिलाषः स्वविषयभोगावसानमन्तरेण केनचित् प्रतिहन्यमानश्चेद्भवति, तदा क्रोधरूपेण परिणमते । तन्मयः क्रोधमयः । स क्रोधो यदि केनचिदुपायेन निवर्तितः स्यात् तदा प्रसन्नं चित्तमक्रोधः तन्मयोऽक्रोधमय इत्यर्थः । तथा इष्टवस्तुसंयोगनिमित्तो हर्षः, तन्मयः 'हर्षमयः' । इष्टवस्तुवियोगनिमित्तः 'अहर्षः' तन्मयः 'अहर्षमयः' । एवमक्रोधहर्षमयत्वे क्रोधाहर्षमयत्वे चात्मनः क्रमेण पुण्यापुण्यमयत्वं भवतीत्याह—**धर्ममयोऽधर्ममय** इति । न हि क्रोधादिभिर्विना धर्माधर्मप्रवृत्तिरुपपद्यत इत्यर्थः । एवं धर्माधर्ममयः सन् सर्वप्रायो भवतीत्याह—**सर्वमय** इति । सर्वस्य व्याकृताव्याकृतस्य जगतो धर्माधर्मकार्यत्वेन तत्र तत्र प्रतिपद्यमानस्तन्मयः सन् 'सर्वमयः' भवतीत्यर्थः । ननु—व्याकृतमयत्वस्य प्रत्यक्षसिद्धत्वेऽपि अव्याकृतमयत्वस्य तदभावात् कथं सर्वमयत्वं ज्ञातुं शक्येत इत्याशङ्कायां अपरोक्षेण कार्यलिङ्गेन तत्कारणीभूतः परोक्षोऽपि धूमादग्निरिव ज्ञातुं शक्यत इत्यभिप्रेत्य सर्वमयत्वं साधयति—**तद्यदेतदिदंमयोऽदोमय** इति । यत्किमपि कर्म शुभाशुभचेष्टारूपं साक्षादुपलभ्यते । तत् इदमित्युच्यते । तेन प्रत्यक्षेण लिङ्गेन भावनारूढपरोक्षतत्कारणत्वेन अनुमीयमानमद इत्युच्यते । तथा च यदा यस्मिन् समये आत्मा गृह्यमाणविषयादिमयः तदा 'इदंमयः' इत्यर्थः । तथा कार्येणानुमीयमानभावनात्मकक्रियादिमयः 'अदोमयः' । तदिति पदं सर्वमयत्वसाधनोपसंहारार्थम् । तदिदं सर्वमयत्वं सिद्धमित्यर्थः । इदानीं विज्ञानमयादिवाक्यार्थं संक्षिप्याह—**यथाकारी यथाचारी तथा भवतीति** । यथा कर्तुं शीलमस्यास्तीति 'यथाकारी' । यथा चरितुं शीलमस्यास्तीति 'यथाचारी' । सः 'तथा' तादृशो 'भवति' । करणचरणानुरूपो भवति । करणं नाम विधिप्रतिषेधगम्या नियता क्रिया, चरणं तु अनियतक्रिया, इति विवेकः । एवं यथाकारीत्याद्यनूद्य तथा भवतीत्येतत् व्याचष्टे—**साधुकारी साधुर्भवति पापकारी पापो भवतीति** । साधुरुत्कृष्टः विप्रत्वब्राह्मणादिर्लोके भवति । 'पापः' निकृष्ट एव स्थावरादौ 'भवति' जायत इत्यर्थः । ननु—साधुकारीत्यादौ ताच्छील्यप्रत्ययश्रवणात् भूयोऽभ्यासादेव पुण्यपापसम्बन्धो भवति न सकृदनुष्ठानात्, इत्याशङ्कायां प्राप्तायां सकृदनुष्ठानादपि पुण्यपापसम्बन्धो भवत्येवेति दर्शयितुं शङ्काबीजं ताच्छील्यप्रत्ययं विहाय आह—**पुण्यः पुण्येन कर्मणा भवति पापः पापेन** इतीति । 'पुण्यः' पुण्यवान् 'पापः' पापवान् । तथा च पुण्यपापकर्मभ्यामेव तत्फलातिशयो भवतीत्येवंपरतैव ताच्छील्यप्रत्ययोपादानस्य । न तु सकृदनुष्ठानात् तत्फलसम्बन्धाभावपरत्वमित्यर्थः । अत एव उत्कृष्टापकृष्टयोनिप्राप्तौ पुण्यापुण्ययोरेवासाधारणकारणत्वं, इतरेषां तु साधारणत्वम्, अतः सर्वदा पुण्यमेवानुष्ठेयम् । नेतरत्, इति भावः ॥ ६ ॥

( त्यु ) अथो खल्वाहुः । काममयऽएवायम्पुरुषऽइति स यथाकामो भवति तथाक्रतुर्भवति यथाक्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यतऽइति ॥ ७ ॥

तदेष श्लोको भवति । तदेव सक्तः सह कर्मणैति लिङ्गम्मनो यत्र निषक्तमस्य । प्राप्यान्तङ्कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणऽइति नु कामयमानोऽथाकामयमानो योऽकामो निष्कामऽआप्तकामऽआत्मकामो भवति न तस्मात्प्राणाऽउत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येति ॥ ८ ॥

---

अथो खल्वाहुः । काममय एवायं पुरुष इति । स यथाकामो भवति तथाक्रतुर्भवति । यथाक्रतुर्भवति तत्कर्म कुरुते । यत्कर्म कुरुते तदभिसम्पद्यत इति ॥ ७ ॥

तदेष श्लोको भवति—"तदेव सक्तःसह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे । "

---

पुण्यपापयोरेव संसारासाधारणकारणत्वमिति यदिदमुक्तं तत् पूर्वपक्षीकृत्य इदानीं काममेवासाधारणकारणत्वमिति सिद्धान्तमभिप्रेत्याह—अथो खल्वाहुः काममय एवायं पुरुष इतीति । पूर्वपक्षानन्तरं सिद्धान्तप्रदर्शनार्थोऽथोशब्दः । 'खलु' निश्चये । स्थूलदृश एके आचार्याः पुण्यापुण्यमयोऽयं पुरुष इत्याहुः कथयन्ति । अन्ये पुनस्तत्त्वदृशः 'अयं पुरुषः' खलु 'काममय एव' कामो विषयाभिलाषस्तन्मय इत्याहुः । न चैवं सति अविद्यायाः संसारहेतुत्वानुपपत्तिः, तस्याः स्वतः तद्धेतुत्वानुपपत्तेः इष्टत्वात् । सहकार्यपेक्षायां तु कामस्यैव प्राधान्यात् काम एव असाधारणं कारणं संसारस्य । उक्तयोः पुण्यपापयोरपि तदभावेऽनुदयात् "अकामस्य क्रिया काचित् दृश्यते नेह कस्यचित् । यद्यद्धि कुरुते किंचित् तत्तत् कामस्य चेष्टितम् "—इति मनुस्मरणात् । कामान् यः कामयते मन्यमानः स कामस्यैवासाधारणकारणत्वात् उक्तं काममय एवेत्यवधारणमित्यर्थः । कथं पुनः कामस्य संसारकारणत्वमित्यपेक्षायामाह—स यथाकामो भवति तथाक्रतुर्भवति यथाक्रतुर्भवति इत्यादिना । स आत्मा सामान्यतः काममयः सन् 'यथाकामः' यादृशेन कामविशेषेण युक्तो भवति, तथाक्रतुर्भवति । क्रतुर्नामाध्यवसायः, यदनन्तरा क्रिया प्रवर्तते । काम एव ईषदभिलाषमात्रे यस्मिन् विषये अभिव्यक्तो भवति । स तस्मिन् विषये अविहन्यमानः स्फुटीभवन् क्रतुत्वमापद्यते तन्मय आत्मा भवतीति यावत् । स 'यथाक्रतुर्भवति' यादृशकर्मविषयेण क्रतुना युक्तो भवति । 'तत्कर्म कुरुते' । यद्विषयः क्रतुः तस्य तत्फलसिद्धये तद्योग्यं कर्म निर्वर्तयतीति यावत् । 'यत्कर्म कुरुते' 'तदभिसम्पद्यते' तदीयं फलमभिसम्पद्य प्राप्नोति । तस्मात् सर्वसंसारे काममयत्वं हेतुरित्यर्थः ॥ ७ ॥

ब्राह्मणोक्तेऽर्थे मन्त्रसम्मतिमाह—तदेष श्लोको भवति तदेव सक्तःसह कर्मणैतीति । तत्र ब्राह्मणोक्तेऽर्थे एष सार्थः 'श्लोकः' मन्त्रो भवति । 'अस्य' उक्तनाभिलाषस्य 'लिङ्गं' मनः ... प्रधान-

इति नु कामयमानः । अथाकामयमानः । योऽकामो निष्काम आत्मकाम आप्तकामो भवति । न तस्मात् प्राणा उत्क्रामन्ति । अत्रैव समवनीयन्ते । ब्रह्मैव सन् ब्रह्माप्येति ॥ ८ ॥

---

त्वात् मन इत्यवगम्यम् । यत्र प्रमात्रादिसाक्षी येन साक्ष्येण मनसा लिङ्ग्यते, तन्मनो लिङ्गमिति तल्लिङ्गं 'मनो यत्र' यस्मिन् गन्तव्ये फले 'निषक्तं' निश्चयेन सक्तं भवति । तन्मनः तत्तत्फलस्यापन्न 'सन्' 'कर्मणा' फलारम्भकीभूतकर्मणा 'सह' 'तदेव' गन्तव्य फलमेति गच्छतीत्यर्थः । तथा च—फलाभिलाषात् तत्कर्म कृतवान्, तत्र मनोऽभिषक्तत्वात् तेन कर्मणा सहास्य तत्फलप्राप्तिरिति वाक्यार्थे स्थिते कामो मूलं संसारस्येत्यवगतम् । तथा च पर्यायाप्तकामस्य कृतात्मनश्च "इहैव सर्वे प्रविलीयन्ति कामाः" —(　　　　)

इति श्रुत्यन्तरात् अवाप्तसमस्तपुरुषार्थस्य मुमुक्षोर्जीवन्मुक्तस्य कथंचिद् शरीरे जीवद्दशायामेव कामविनाशश्रवणात् अर्थात् विद्यमानान्यपि कर्माणि कामहीनस्य निष्फलप्रायाणि इत्यवगमे काम एव संसारे हेतुरिति भावः । ननु—कामयमानः संसरति चेत्, कर्मफलभोगानन्तरं कामाभावात् मुक्तिरेव भविष्यतीत्याशङ्कायामाह—प्राप्यान्तं कर्मण इत्यादिना । अयं फलासक्तः कामी इहास्मिन् लोके यत्किंचित्कर्म करोति 'तस्य' 'कर्मणः' भोगेन अन्तमवसानं 'प्राप्य' कर्मफलभोगसमाप्तिं गत्वा 'तस्मात् लोकात्' भुक्तभोगात् 'पुनरेति' आगच्छति । 'अस्मै लोकाय कर्मणे' । कर्मप्रधानत्वात् अयं लोकस्य कर्मण इति विशेषणम् । अस्मिन्मनुष्यलोके कर्मकरणार्थमित्यर्थः । तस्मादेव फलासक्तः सन् कर्म कृत्वा तत्फलभोगार्थं गच्छति । ततश्च पुनः कर्मकरणार्थमागच्छतीत्येवंभूतजननमरणप्रवाहस्य विना ब्रह्मज्ञानमनुच्छेदात् न कर्मफलभोगावसाने मुक्तिः शक्येति भावः । इदानीमज्ञानकारणकं काम एव संसारानुसरणकारणमिति युक्तमुपसंहरति—इति नु कामयमान इति । इत्येव 'नु' खलु 'कामयमानः' संसरतीति शेषः । एवं इयता प्रबन्धेन अवस्थात्रयदृष्टान्तस्य दार्ष्टान्तिकभूतः संसारः सकारणको दर्शितः । इदानीं गोविहल्लिङ्गेनैव पुनः सुषुप्तिगतस्यात्मनः कामादिहीनं रूपं मोक्षरूपं तदुक्तं यत् अति-च्छन्दोवाक्येनोक्तं तस्य दार्ष्टान्तिकभूतं मोक्षाय मोक्षस्वरूपमाह—अथाकामयमान इत्यादिना । अथशब्दः संसारप्रकरणविच्छेदार्थः । यस्मात् कामयमान एव एवं संसरति । तस्मादकामयमानो विद्वान् कदाचित्संसरति । "न तस्मात्प्राणा उत्क्रामन्ति" इति वचनात् कामाभावे तदुत्थसंसरणहेतुकर्माभावाच्च । किं तर्हि "ब्रह्मैव सन् ब्रह्माप्येति" इत्यभिप्रायान्वयः । कुतोऽकामयमानः स्यादित्यत आह—योऽकाम इति । बाह्येषु शब्दाद्यर्थेषु दृष्टिपूर्विकाः कामा यस्य न सन्ति सः 'अकामः' इत्यर्थः । अकामोऽपि कुतो हेतोरित्यत आह—निष्काम इति । अनिग्रहादिहेतुः शब्दादिविषयात्मकाः अन्तःस्था ये कामाः ते निर्गता यस्मात् सः 'निष्कामः' । अतः अकामपदेन बाह्या निरस्यन्ते । निष्कामपदेन तद्धेतुभूता आन्तरा इति अपौनरुक्त्यमित्यर्थः । कथं च निष्कामत्वं भवतीत्यपेक्षायामाह—आत्मकाम इति । आत्मैव सर्वमिति ज्ञानेन सर्वशब्दादिप्रपञ्चस्य आत्ममात्रत्वे प्रतिपन्ने व्यतिरिक्तकामयितव्याभावादित्यात्मकामत्वम् । अतः शब्दादिसाध्यसुखस्यापि आत्ममात्रत्वात् आत्मैव कामो यस्य सः 'आत्मकामः' इत्यर्थः । अत एव—आप्तकाम इति । आप्ताः कामा येन सः 'आप्तकामः' । आत्मरामत्वादाप्तकामत्वमित्यर्थः । अर्थादात्मतत्त्वज्ञानाभावे अकामयमानत्वासम्भवात् संसारो दुर्वार इति आत्मनो ज्ञानाय यतितव्यमिति सूचितं भवति । किमेवंविधस्य भवतीत्यपेक्षायां मोक्ष एव भवतीत्याह—न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीति । 'तस्मात्' अकामयमानात्सकाशाद्धि 'प्राणाः' वागादयः 'नोत्क्रामन्ति' । कामाभावेन कर्माभावे सति गमनकारणाभावात् । किं तु—तप्तलोहनिक्षिप्तोदकबिन्दुवत् अत्रैव ब्रह्मस्वरूप एव 'समवनीयन्ते' सम्प्रलीयन्ते इत्यर्थः । स चाकामयमानो जीवन्नेव 'ब्रह्मैव

तदेष श्लोको भवति । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः * । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुतऽइति ॥ ९ ॥

तद्यथाऽहिनिर्ल्वयनी । वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदꣳ शरीरꣳ शेतेऽथायमनस्थिकोऽशरीरः प्राज्ञऽआत्मा ब्रह्मैव लोकऽएव सम्राऽडिति होवाच याज्ञवल्क्यः सोऽहम्भगवते सहस्रन्ददामीति होवाच जनको वैदेहः ॥ १० ॥

---

तदेष श्लोको भवति–" यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते "–इति ॥ ९ ॥

तद्यथा अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत, एवमेव इदं शरीरं शेते । अथायमनस्थिकोऽशरीरः प्राज्ञ आत्मा ब्रह्मैव लोक एव सम्राट् इति होवाच याज्ञवल्क्यः । सोऽहं भगवते सहस्रं ददामि, इति होवाच जनको वैदेहः ॥ १० ॥

---

सन् 'सुषुप्तवन्यायामिव अपरिच्छिन्ननिःशेषाद्वैतात्मविज्ज्योतिः स्वभाव सन् ' ब्रह्माप्येति ' प्राप्नोति निःयथामत्वादेव अप्येतिशब्देन प्राप्तिरुपचर्यते इत्यर्थः ॥ ८ ॥

इदानीं काममय समस्तीति ब्राह्मणोक्तेऽर्थे यथा पूर्वप्रकरणे मन्त्रोदाहरणं कृतं तथा अत्राप्युक्तेऽर्थे मन्त्रमुदाहरति–तदेष श्लोको भवति यदा सर्वे प्रमुच्यंत इति । तत्तस्मिन्नुक्ते मोक्षसाधनेऽर्थे ' एष श्लोकः ' मन्त्रः ' भवति ' अकामस्याकामस्य ब्रह्मविदः । ' यदा ' यस्मिन् काले विद्यापरिपाकावस्थायां ' हृदि श्रिताः ' ' ये कामाः ' तृष्णात्वेन व्यवह्रियमाणा विविधेन्द्रियप्रवृत्तिहेतुभूता सन्तो जगज्जनका वासनात्मकाः । ते ' सर्वे ' समस्ताः ' प्रमुच्यन्ते ' समूलतो विशीर्यंते । न तु सुषुप्ताविव कारणात्मना अवतिष्ठन्ते । ' अथ ' अनन्तरं सकल कामवियोगलक्षणात् तदा ' मर्त्यः ' मरणधर्माऽपि सन् ' अमृतः ' अमरणधर्मा भवतीति यावत् । तत्र कामवियोगादमृतो भवतीति निर्देशसामर्थ्यात् अविद्यालक्षणा अनात्मविषया कामा मृत्यवो भवन्तीत्यवगम्यते । किं तदमृतत्वं क वा भवतीत्यत उच्यते–अत्र ब्रह्म समश्नुत इति । अत्रास्मिन्नेव शरीरे स्थितः सन् ' ब्रह्म ' ' समश्नुते ' ब्रह्मीभूतो भवति ब्रह्मभावापत्तिलक्षणो मोक्ष एवामृतत्वम् । तत्र विद्वच्छरीर एव कामनिवृत्त्या अभिव्यज्यते । स्वतः सिद्धमेवेत्यर्थः ॥ ९ ॥

ननु–विदुषः सर्वात्मविद्यया आत्ममात्रत्वेन प्राणादिषु वाश्रितेष्वपि असौ देहे वर्तते तदेतस्य पूर्वं वत् देहं हित्वा द्विधा वैधर्म्यमेवेत्याशंकायां तन्निराकरणार्थं तावत् दृष्टान्तमाह–तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतेति । तत्तत्र दृष्टान्तः । ' यथा ' लोके अहिः सर्पः यस्याः त्वचि नितरां लीयते सा सर्पस्य त्वक् ' अहिनिर्ल्वयनी ' । सा ' मृता ' अहिदेहवियुक्ता ' वल्मीके ' सर्पाश्रये ' प्रत्यस्ता ' प्रतिक्षिप्ता सर्पेणानात्मभावेन परित्यक्ता सती ' शयीत ' वर्तेत । सर्पश्च यथा तत्र निर्गमनप्रवेशौ कुर्वन्नपि निर्मोकक्लृप्तिको वर्तत इति अपरो दृष्टान्तः अर्थात् विवक्षित इत्यर्थः । निर्मोकदृष्टान्तस्य

---

* " स्थिता " इति काण्व० पाठः ।

( स्त ) तदप्येते श्लोकाः । ( ८ ) अणुः पन्था विततः पुराणो माᳬ

तदप्येते श्लोकाः—" अणुः पंथा विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव । तेन धीरा अपियन्ति ब्रह्मविद उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः ॥ ११ ॥

दार्ष्टान्तिकमाह—एवमेवेदं शरीरं शेत इति । यथाऽयं दृष्टान्तः 'एवमिदं शरीरं' स्थूलं सूक्ष्मं च सर्वस्यात्मत्वेन मुक्तेन परित्यक्तं मृतमिव सम्बन्धवर्जितं 'शेते' विद्यया सम्बन्धहेतोरविद्यायाः समुच्छेदादिति । ननु—दृष्टान्ते सर्पतन्निर्मोकयोर्भेदेनावस्थितत्वेन दार्ष्टान्तिकेऽपि विद्वद्देहयोरन्यता स्यात् । अन्यथा देहदेहिभावासिद्धेरिति चेन्मा मस्थाः । यथा अहिनिर्मोकयोः पूर्ववदिदानीं मिथः सम्बन्धो नास्ति । तद्वद्देहिदेहयोरपि पूर्ववत् मिथ्याऽभिमानाख्यः सम्बन्ध इदानीं नास्तीत्येतावन्मात्रमत्र विवक्षितम् आदित्यमित्येव सर्वदृष्टान्तस्य दार्ष्टान्तिकमाह—अथाऽयमनस्थिकोऽशरीरः प्राज्ञ आत्मा ब्रह्मैव लोक एव सम्राडिति होवाच याज्ञवल्क्य इति । अथशब्दो हेत्वर्थः । अथ सकारणस्य देहस्य त्यागादित्यर्थः । अयमात्मा आत्मस्वरूपापन्नो विद्वान् 'अनस्थिकः' । अस्थीति मरणधर्मकशरीरगतस्याऽस्थिभावस्योपलक्षणम् । न विद्यते अस्थि मरणधर्मकं मज्जादिकं यस्मिन् स अनस्थिकः अमृत इत्यर्थः । तथा चाग्निरहस्ये श्रूयते—" अमरं हैतदेव प्रजापतिरात्मनः चैवामृतं च " ( श. प. १०।१।४।१ ) इति प्रक्रम्य " अथ पुरीषं निवपति तद्यदेतदस्थीव लोमवत् तत् तस्मात् मर्त्यं यदमृतं स्वक् " ( श. प. १० । १ । ४ । ७ ) इति । अमृत इतो हेतोरित्यत आह—' अशरीरः ' । अविद्यादृष्ट्या शरीरस्थः स्वदृष्ट्या ' अशरीर ' एव । अत एव ' प्राज्ञः ' साक्षी । स च एतद्विशेषणविशिष्टो विद्वान् ' ब्रह्मैव ' अशनायादिवर्जितः परमात्मैव । ब्रह्मशब्दस्य कमलासनादिविषयत्वं वारयितुं ' लोक एव ' स्वप्रकाश इति विशेषणं बोध्यम् । याज्ञवल्क्य मुनिः ' सम्राडिति ' राजानं सम्बोध्य इत्येवं ' ह ' किल ' उवाच ' उक्तवान् । तथा च—अवस्थितस्यापि विदुषो देहसम्बन्धहेतुज्ञानध्वस्तौ पूर्ववच्छरीराभिमानाभावात् विदेहत्वमिति भावः । एवं मुनिना विमोक्षार्थः कामप्रश्नो वरे दत्तः । स यद्यपि सहेतुको बन्धो मोक्षश्च दृष्टान्तपूर्वको जनकयाज्ञवल्क्याख्यायिकारूपया श्रुत्या सविस्तरो निर्णीतः । तथापि आत्मज्ञानहेतुसंन्यासस्य पूर्वमसङ्कीर्तितत्वेऽपि ज्ञानोत्पत्त्यनन्तरभूतशमादीनां तत्रानुक्तत्वात् तैः सह मुक्तोऽपि सम्यग्ज्ञानो विमोक्षमात्रस्यैव विषयत्व इति वक्तव्यविशेषसम्भवात् सहस्रदानमेव राजा स्वजिज्ञासानिवृत्त्यभावं सूचयन् प्रतिजज्ञे, न सर्वस्वं दत्तमित्येतदाह श्रुतिः—सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेह इति । ' सोऽहं ' इत्थं विमोक्षितवन्तं ' भगवते ' ' सहस्रं ददामि ' इति पूर्ववत् । नन्वेवं जनकस्तोऽपि सन्, राजा पूर्ववत् " अत ऊर्ध्वं विमोक्षायैव ब्रूहि " इति कस्मान्न पृष्टवानिति चेत् सत्यं, शास्त्रे आलोच्यमाने ज्ञानादन्यत् साक्षान्मोक्षसाधनं नोपलभ्यते । संन्यासादेस्तु तद्द्वारैव साधनत्वादिति विचारयन् विमोक्षायेति नापृच्छत् । विदुषो हि निःशेषकर्मत्यागात्मकः स्वरूपावस्थितस्य स्वतः सिद्धः संन्यासादिः, न ज्ञानसाधनम् । किं तु " संन्यासेन तनुं त्यजेत् " (  ) इति स्मृतेः प्रतिपत्तिकर्मानुष्ठानमिति न तत्र जिज्ञासा । विविदिषोः पुनः " त्यागेनैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदम् " इति वचनात् ज्ञानार्थत्वेन संन्यासः सर्वाङ्गको वक्तव्यः इति युक्तं तदर्थं महद्दानमिति भावः ॥ १० ॥

" अथाकामयमान " इत्यादिवाक्येन " यदा सर्वे प्रमुच्यन्ते " इति मन्त्रेण च ज्ञानादेव मुक्तिरिति यः

आत्मानञ्चेद्विजानीयात् । (द) अयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसञ्चरेत् ॥ १६ ॥

यस्यानुवित्तः प्रतिबुद्धऽआत्मा । (तमाऽ) अस्मिन्त्सन्दहे गहने प्रविष्टः । स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः सऽउ लोकऽएव ॥ १७ ॥

---

आत्मानं चेद्विजानीयादयमस्मीति पुरुषः । किमिच्छन् कस्य कामाय शरीरमनुसंचरेत् ॥ १६ ॥

यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् संदेहे गहने प्रविष्टः । स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥ १७ ॥

---

इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदिर्महती विनष्टिः । ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥ १५ ॥

एतद् तद्ब्रह्म इति । 'तदेव' तत्रैव प्रसिद्धे अनेकानर्थसंकुले देहे एव अज्ञानदीर्घनिद्रारहिताः 'सन्तः' वर्तमाना वयं 'तद्' तदात्मतत्त्वं कथञ्चित् कर्म्यभयात् तद्ब्रह्म 'अथ' 'विद्मः' वर्तामहे । अहो कृतार्थो वयमित्यभिप्रायः । ब्रह्मभावज्ञाने सति कृतार्थत्वं श्रुत्यनुभवाभ्यामुक्त्वा तदभावे दोषमाह—न चेदवेदी महती विनष्टिरिति । चेद्ब्रह्म वयम, तद्ब्रह्मत्वं न चेद्विदितवतः । तर्हि अहं 'अवेदी' अविद्वान् भवेयमिति शेषः । वेदनं वेदः सोऽस्यास्तीति वेदी न वेदी अवेदी । तदा 'महती' अनन्तपरिणामा जन्ममरणादिलक्षणा 'विनष्टिः' विनाशन स्यात् इति शेषः । एवं पूर्वार्द्धेन उक्तमेवार्थं उत्तरार्द्धेन प्रपञ्चयति—ये तद्विदुरमृतास्ते भवन्तीति । यथा वयं ब्रह्मविदो भूत्वा अस्माद्विनाशनाद्विमुक्ताः । एवं 'ये' तद्ब्रह्म विदुः 'तेऽप्यमृताः' मुक्ता भवन्ति । अथ पुनर्ये एवं न विदुः ते 'इतरे' अब्रह्मविदः जननमरणलक्षणं दुःखमेवोपयन्ति प्रतिपद्यन्ते । न कदाचिदपि दुःखान्निवर्तन्ते इत्यर्थः ॥ १५ ॥

तदेवं मार्गान्तरनिन्दाव्याजेन आत्मज्ञानमार्गः स्तुतः । पुनरपि तत्स्तुत्यर्थमेव तन्निष्ठस्य कायक्लेशराहित्यं दर्शयति—आत्मानं चेद्विजानीयादिति । "अयमात्मा ब्रह्म" "अहं ब्रह्मास्मि" "तत्त्वमसि"—इत्यादिवाक्यात् 'पुरुषः' पुमान् 'अयं' परमात्मास्मि, अहमेवेत्यात्मानं कस्य अज्ञानापाये च कथञ्चित् सत्त्वशुद्धितो यदि 'विजानीयात्' । तर्हि स 'किमिच्छन्' सर्वस्य वस्तुजातस्यात्ममात्रत्वात् स्वरूपव्यतिरिक्तं किं वस्तु फलभूतमिच्छेत्, न किञ्चिदपि, इत्यपेक्षाया किंशब्दः । एतदेव प्रकटयति—'कस्य कामाय' कस्मै फलाय 'शरीरमनुसंचरेत्' अनुतप्येत् शारीरोपाधिकृतदुःखमनुदुःखी स्यात् शरीराद्युपाधिभेदेनात्मनः साक्षात्कृतत्वात् न तदु तेन विद्वान् दुःखी स्यात् इत्यर्थः ॥ १६ ॥

न केवलं आत्मविदामनिकाम्यं कायक्लेशराहित्यं किं तु कृतकृत्यता चास्तीत्याह—यस्यानुवित्तः प्रतिबुद्ध आत्मेति । 'अस्मिन्' प्रसिद्धे 'संदेहे' तेजोऽबन्नादिभिर्भूतैः सदियते समुपचीयते इति संदेहो देहः । तस्मिन् देहे । कथंभूते? आध्यात्मिकादीनामनर्थानामनिकरादुगुणत्रयानभावेन दुर्यकरणयोग्यतया 'गहने' दुर्विज्ञेयं जलपूर्वकप्रविष्टः 'आत्मा' 'यस्य' ब्राह्मणस्य । यद्वा येन ब्राह्मणेन 'अनुवित्तः' अनुलब्धः, 'प्रतिबुद्धः' 'अहमस्मि परं ब्रह्म' इत्येवं प्रत्यगात्मत्वेन साक्षात्कृतश्च वर्तते इति शेषः । 'स' ब्राह्मणः 'विश्वकृत्' विश्वकर्ता कृतकृत्यः पूर्णः इत्यर्थः । ननु—विश्वकृत्त्वं परस्यैवोक्तमेव स्यादित्यत आह—तस्य लोक इति ।

य॒दै॒तम॑नुप॒श्यति । ( त्मा ) आत्मानन्दे॒वम॑ञ्ज॒सा । ई॒शा॒नम्भू॒तभ॑व्य॒स्य न त॒दा वि॒चि॑कित्सति ॥ १८ ॥

य॒स्मि॒न्पञ्च॑ पञ्च॒जना॑: । (ऽ) आ॒का॒श॒श्च॒ प्रति॑ष्ठितः । त॒मे॒व म॑न्य॒ऽआत्मा॑नम्वि॒द्वान्ब्र॒ह्मामृ॒तो॒ऽमृत॑म् ॥ १९ ॥

य॒स्मा॒द॒र्वाक्स॑म्वत्स॒रः । ( गो॒ऽ ) अहो॑भिः परि॒वर्त्त॑ते । त॒द्दे॒वा ज्योति॑षा॒ञ्ज्योति॑रा॒युर्ह्यो॑पासते॒ऽमृत॑म् ॥ २० ॥

---

यदैतमनुपश्यत्यात्मानं देवमंजसा । ईशानं भूतभव्यस्य न तदा विचिकित्सति ॥ १८ ॥

यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥ १९ ॥

यस्मादर्वाक् सम्वत्सरोऽहोभिः परिवर्तते । तद्देवा ज्योतिषां ज्योतिरायुर्ह्योपासतेऽमृतम् ॥ २० ॥

---

'तस्य' ब्राह्मणस्य सर्वोऽपि प्रपञ्च 'लोकः' आत्मेत्यर्थः । ननु-तर्हि लोकलोकिनोर्भेद एव स्यादित्यत आह-स उ लोक एवेति । सोऽपि ब्राह्मणः सर्वस्य प्रपञ्चस्य 'लोक एव' आत्मैवेत्यर्थः । तथा च-येन ब्राह्मणेन प्रत्यगात्मा प्रतिबुद्धतया अनुवित्तः स न संसारी । किं तु पर एव । यस्मात् विश्वकर्ता सर्वस्य चात्मा सर्वं चास्यात्मा । तस्मात् यः परमात्मा सर्वप्रकारभेदरहितः पूर्णतया वर्तते स एवाहमस्मीति आत्मा अनुसन्धातव्य इति तात्पर्यार्थः ॥ १७ ॥

किंच-विदुषः विहिताकरणादिप्रयुक्तं भयं नास्तीति विद्यां स्तौति मन्त्रान्तरमाह-यदैतमनुपश्यतीति । 'यदा' पुनः कथंचित् परमकारुणिकं कंचिदाचार्यं प्राप्य ततो लब्धप्रसादः सन् 'अनु' पश्चात् 'एतं' हृदयस्थं 'आत्मानं' 'देवं' द्योतनात्मकं, यद्वा यथाकर्मानुरूपसर्वप्राणिकर्मफलानां दातारं देवं भूतभव्यस्य कालत्रयस्य 'ईशानं' स्वामिनं 'अंजसा' साक्षात् 'पश्यति' अहं ब्रह्मास्मीत्यात्मत्वेन विजानाति । 'तदा' तदानीं 'न विचिकित्सति' न संशयानो भवति । अहमस्मि सर्वो मा परं ब्रह्मेति निश्चितमतिर्भवतीत्यर्थः । "विचिकित्सा तु संशय" इत्यमरः । यद्वा 'न विचिकित्सति' न निन्दति सर्वस्यात्मभावदर्शने निन्दनीयस्य स्वस्य इतरस्य वा अभावादित्यर्थः । यद्वा, तद्दर्शनानन्तरं स्वात्मानं अकृतार्थत्वेन न गर्हयतीत्यर्थः ॥ १८ ॥

इदानीं तस्य तस्यात्मनः अमृतत्वं सर्वाधिष्ठानत्वेन साधयति-यस्मिन् पञ्च पञ्चजना इति । 'यस्मिन्' ब्रह्मणि 'पञ्च' पञ्चसंख्याकाः 'पञ्चजनाः' पञ्चजनसंज्ञकाः गन्धर्वाः पितरो देवा असुरा रक्षांसि आकाशान्ताः 'प्रतिष्ठिताः' । यद्वा, प्राणादयः "वाक्यशेषात्" (पू.मी.१।४।(१९)२९) इति न्यायेन प्राणश्चक्षुः श्रोत्रमन्नं मनश्चेति 'पञ्चजनाः प्रतिष्ठिताः' आकाशश्च यस्मिन् सूत्रमोतः प्रोतः च सोऽप्याकाशश्च यस्मिन् प्रतिष्ठितः । "एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" (श.प.१४बृ.उ ३।८।११) इत्युक्तत्वात् । तमेवात्मानममृतं विद्वान् अहममृत इति 'मन्ये' जाने । मदन्यस्याज्ञानमात्रकल्पितत्वात् तस्य च नश्वरत्वादित्यर्थः ॥ १९ ॥

ननु-ईश्वरोऽपि कालावच्छिन्न अतो ■ कालत्रय प्रति अस्य इत्यमृतत्वं इत्यत आह-यस्मादर्वाङ्

विरजः पुरऽआकाशात् । ( द ) अजऽआत्मा महान्ध्रुवः । तमेव धीरो विज्ञाय प्रज्ञाङ्कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनꣳ हि तदिति ॥ २३ ॥

स वाऽअयमात्मा । सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदम्प्रशास्ति यदिदङ्किञ्च स न साधुना कर्मणा भूयान्नोऽएवासाधुना कनीयानेष भूताधिपतिरेष लोकेश्वरऽएष लोकपालः ॥ सेतुर्विधरणऽएषां लोकानामसम्भेदाय ॥ २४ ॥

---

विरजः पर आकाशादज आत्मा महान् ध्रुवः । तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहून् शब्दान् वाचो विग्लापनं हि तत् " इति ॥ २३ ॥

स वा अयमात्मा । सर्वस्य वशी । सर्वस्येशानः । सर्वस्याधिपतिः । सर्वमिदं प्रशास्ति । यदिदं

---

' य इह ' भवति ' नानेव पश्यति ' । स मृत्योर्मरणात् पुनः पुनः मृत्युमाप्नोति जन्ममरणमहाचक्रे परिभ्रमतीत्यर्थ । दैतादर्शं त्यक्त्वा अन्वेष्टव्य इत्येवआत्माह—मनसैवानुद्रष्टव्यमिति । यस्मात् नाना न, तस्मात् ' मनसैव ' श्रवणादिकमनुष्ठाय साक्षात्कर्तव्यः यस्मादेकात्म तस्मादेकधैव ' अप्रमेयं ' अप्रमेयं, तथा ' ध्रुवं ' नित्यमविनाशीत्यर्थ ॥ २२ ॥

उक्तं ध्रुवत्वमेवोपपादयति—विरजः पर आकाशादिति । रजः धर्माधर्मादिलक्षणं रजो विगतं यस्मात् स विरजः । तत आकाशात् अव्याकृताख्यात् ' परः ' अतिरिक्तः । अत एव ' अजः ' न जायत इत्यजः । अजत्वेनैव ' जायते अस्ति विपरिणमते वर्धते अपक्षीयते विनश्यति ' ( निरु० १ । १ । ८ ) इत्युक्ताः सर्वे भावविकाराः निषिद्धा वेदितव्याः, तेषां जन्मादिमत्त्वात् । अतएव आत्मा कितस्त्वाम इत्युच्यते । ' महान् ' परिमाणतो महत्तमः । " यस्मात्परं नापरमस्ति किञ्चित् । यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् " ( तै. उ. प्र ४ ) इति श्रुत्यन्तरात् । न चाध्रुवः अविनाशीत्यर्थः । यथोक्तमनुशासनं निगमयति—तमेव धीरो विज्ञायेति । ' धीरः ' धीमान् ब्राह्मणः ' तमेव ' नित्यशुद्धबुद्धादिलक्षणमात्मानं ' विज्ञाय ' पदार्थशुद्धिं सम्पाद्य शास्त्रत उपदेशतश्च ' प्रज्ञां ' वाक्यार्थज्ञानलक्षणां आत्मनोऽपरोक्षज्ञानलक्षणां परमपुरुषार्थभूतां तत्त्वमस्यादिवाक्यवशात् ' कुर्वीत ' सम्पादयेदित्यर्थः । बहुशास्त्राध्ययनं प्रतिषेधति—नानुध्यायाद्बहूञ्छब्दानिति । ' बहून् ' प्रभूतान् शब्दाननुध्यायान् नानुचिन्तयेत् । बहुशास्त्राध्ययननिषेधे हेतुः " वाचो विग्लापनं हि तदिति " । ' हि ' यस्माद्बहुशास्त्राध्ययनं ' वाचः ' वागिन्द्रियस्य ' विग्लापनं ' विशेषेण ग्लानिकरं श्रमजनकम् । तस्माद्बहुशास्त्राध्ययनं परित्यज्य आत्मज्ञानोपयोगिशास्त्राध्ययनमनुज्ञायते । " अन्या वाचो विमुञ्चथ ओं इत्येवं ध्यायथ आत्मानम् "—( ) इत्याथर्वणश्रुतेरिति भावः ॥ २३ ॥

पूर्वं " तदेव सक्तः सह कर्मणैति " ( क. ८ ) इत्यादिमन्त्रेण " स यत्रायं शारीर आत्माऽबल्यम् " ( क. १ ) इत्यादिब्राह्मणेन च कामादिहेतुसहितो मुमुक्षूणां हेयत्वेनोक्तः " यदा सर्वे प्रमुच्यन्ते " ( क. १ ) इत्यादिमन्त्रेण

तमेतम्वेदानुवचनेन विविदिषन्ति। ब्रह्मचर्य्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति ॥ २५ ॥

किं च । स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान् । एष भूताधिपतिः । एष लोकेश्वरः । एष लोकपालः । स सेतुर्विधरण एषां लोकानामसंभेदाय ॥ २४ ॥

तमेतं वेदानुवचनेन विविदिषंति । ब्रह्मचर्येण । तपसा । श्रद्धया । यज्ञेन । अनाशकेन । एतमेव विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमीप्संतः प्रव्रजंति ॥ २५ ॥

---

" अथाकामयमान " ( क. ८ ) इत्यादिब्राह्मणेन च नेषामेवाभिलषित. सम्यग्धीहेतुको मोक्ष उक्त. । पुनश्च तत्स्वरूपं " अणु पन्था वितत " ( क. ११ ) इत्यादिश्लोकै प्रपञ्चितम् । इदानीं विविदिषावाक्येन महात्मनि कृत्स्नस्य वेदस्य काम्यराशिवर्जितस्य विनियोगकथनार्थमस्मिन्नध्याये उक्त सकलमागमज्ञान–स वा अयमात्मा ( क २५ ) इत्यारभ्य "एषां लोकानामसम्भेदाय" ( क. २४ ) इत्येवमन्तेनानूद्यते । सशब्देन ज्योतिर्ब्राह्मणोक्त विज्ञानलक्षणमय जीव परामृश्य तमेव वेशब्देन स्मारयित्वा तस्य " विरजः पर आकाशादज आत्मेति " अव्यवहितोक्तन परमात्मनैक्य इतिशब्देन श्रुतिर्निर्दिशतीति–स वा अयमिति पदत्रयसमुदायार्थ । इत्थमुक्तमात्मज्ञानमनूद्य तत्फलमाह–सर्वस्य वशीत्यादिना । सर्वस्य ' ब्रह्मेन्द्रादे. ' वशी ' सर्वो हि ब्रह्मेन्द्रादिगण अस्य वशे वर्तत इति यावत् । " एतस्य वा अक्षरस्य प्रशासने "( श. प. ब्रा. १४।६।८।११ ) इत्यादिनोक्तत्वात् सर्ववशित्वे हेतु । यत. ' सर्वस्य ' ब्रह्मेन्द्रादेरीशान. स्वामी । ननु–यथा बलवदमात्यादीन् प्रति राजपुत्रस्य वशित्व तद्वदेवास्यापि स्यादित्यत " सर्वस्याधिपति. " इति विशेषणम् । ' अधिपति ' अधिष्ठाय पालयिता महाराजवत् स्वतन्त्र इति यावत् अधिपतित्वादीशान । ईशित्वाच्च वशीत्यर्थ । किं च–' सर्वमिदं प्रशास्ति यदिदं किंचेति ' यत्किंचित् 'इद सर्वं' जगत्प्रशास्ति । ननु–एवं शासनाल्लोकवत् धर्माधर्मसंयोग ईश्वरस्यापि स्यात् इत्यत आह–स न साधुना कर्मणा भूयानिति । सोऽधिपतिर्विद्वान् ' ' साधुना ' शास्त्रविहितेन ' कर्मणा ' पूर्वावस्थातो भूयान् भवति न वर्धते । ' असाधुना ' शास्त्रप्रतिषिद्धेन ' कर्मणा ' प्रागवस्थात ' नो एव कनीयान् ' अल्पीयान् अल्पतरो न भवत्येवेत्यर्थ. । पाल्यादिकर्तृत्वजन्यधर्मादिकृतसम्बन्ध. कथ नास्तीत्यभिप्रेत्य विद्वास विशिनष्टि–एष भूताधिपतिरेष लोकेश्वर इति । यस्मादेष विद्वान् ' भूताधिपति ' भूतमात्रस्य स्थावरजङ्गमात्मकस्याधिपति तत्तत्स्थानियामकः, कार्याणां कारणाधीनसत्ताकत्वात् । तथा ' एष ' ईश्वर ' लोकेश्वर ' लोकस्य धर्मादेरपि ईशितु शीलमस्येति स लोकेश्वर । धर्मादेरपि नियमनशील इत्यर्थ । तस्मात् कामकर्माविद्याप्रतन्त्राविद्वज्जीववत् नास्य धर्मादिसम्बन्धः अस्ति । तथा ' एष लोकपाल ' लोकान् जनिमत्कार्याणि भूतानि तत्कर्मनिरूपेण तत्र तत्र चेतनात्मरूपेण च पालयतीति ' लोकपाल ' । किं च–यथा उदकप्रवाहविष्टम्भक ' सेतु ' तद्वदेव स परमात्मा सेतु । किंविशिष्ट –' विधरण ' विधारक । यथा सेतु सीमादिव्यवस्था विधारयति । तथा वर्णाश्रमादिव्यवस्थाया विधारक इत्यर्थ । किमर्थम् ? एषां भूरादिब्रह्मलोकान्ताना 'लोकानां' ' असंभेदाय 'संभेद सांकर्यं तदभावाय । एवं राजवल्लक्षणत्वात्तस्य तद्धर्मादिसम्बन्ध इत्यर्थ ॥ २४ ॥

यद्यपि पूर्वा ' अग्निब्राह्मणे ' वाचो विम्लापन हि तत् ' ( क. २१ ) इति श्लोकान्तेन विहिता सकला

महतीदा बलूदित । तत्काण्डैकदेशवर्तिन्या कृत्स्नस्य कर्मकाण्डस्य अविद्यया इत्यस्य विनियोगं दर्शयति-तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन च इति । ब्राह्मणादीनां वर्णानां अध्ययनादौ अधिकृतत्वात् अत्र त्रिवर्णोऽधिकारी बोद्धव्यः । वेदो मन्त्रब्राह्मणात्मकः अनूच्यते गुरुमुखादनन्तरं पठ्यते । इति वेदानुवचनं वेदाध्ययनम् । तथा च द्विजा अधिकारिणः । 'तमेतं' सर्वोपनिषत्प्रसिद्धम् औपनिषदं पुरुषं 'वेदानुवचनेन' नित्यस्वाध्यायलक्षणेन अन्तःकरणशुद्धिद्वारा 'विविदिषन्ति' वेदितुमिच्छन्ति । न तु विदन्त्येव । स्वातन्त्र्येण ईश्वरानुग्रहविरहायां बुभुत्साया अपि दुर्लभत्वात् । "न त्वौपनिषदं पुरुषमिति" इतिश्रुतेः पुरुषस्यैतस्य उपनिषदेकगम्यत्वावगमाच्च न साक्षाद्वेदनार्थं वेदानुवचनानि । किं तु विविदिषार्थमेवेति । तथा 'ब्रह्मचर्येण' स्त्रीसम्भोगनिवृत्तिलक्षणेन नैष्ठिकेन ब्रह्मचारिकर्मणा । तथा 'तपसा' नियमेन शास्त्रोक्तस्य स्वलौकिकश्वासादिविनिग्रहात् शीतोष्णादिद्वन्द्वसहनं तपः, तेन तपसा । तथा 'श्रद्धया' अदृष्टार्थेषु कर्मसु देवताज्ञानादिषु च वेदबोधितेषु आस्तिक्यबुद्धिः श्रद्धा तया । तथा 'यज्ञेन' द्रव्ययज्ञेन ज्ञानयज्ञेन च । तथा 'अनाशकेन' कामानशनलक्षणेन च 'विविदिषन्तीति' प्रत्येकं सम्बध्यते । अत्र कामानशनमेवानाशकम् । न तु भोजनाभावः । तथा सति मरणसम्भवेन आत्मविविदिषोत्पत्तेरनवकाशात् । यद्वा सङ्कल्पपूर्वकं मरणान्तमनशनमनाशकम् । वेदानुवचनादीनामैहिकविविदिषाहेतुत्वे नियमाभावात् । देहान्तरस्यापि साधनस्य जन्मान्तरविविदिषाद्वारा मुक्तिहेतुत्वाच्च । तथाचास्मिन् जन्मनि साधनचतुष्टयसम्पत्तिर्येन ज्ञाता । तर्हि आमरणान्तिकमनशनं कुर्यात् । यदा पुनरिहैव साधनचतुष्टयसम्पन्नो भवति । तदा आमरणानशनं दूरादेव त्यजेत् । तस्य "श्रोतव्यो मन्तव्यः" इत्यादिश्रुत्या श्रवणादावेव विनियुक्तत्वादिति भावः । तस्मादिहैव यानि काम्यानि कर्माण्युक्तानि गर्भवासादावर्तनहेतुत्वेन इति यदा ज्ञायन्ते तदा तेषु जिहासा उपावर्तते । ततश्च नित्याद्यनुष्ठानात् परिशुद्धबुद्धेः विविदिषाद्वारा कर्मणो मुक्तिहेतुत्वे सिद्धे काण्डद्वयस्यैकवाक्यता सिद्धेति तात्पर्यं बोध्यम् । एवं कर्मकाण्डोक्तस्याध्ययनादिकर्मणोऽपि उपयोगेऽङ्गीकृते ज्ञानकाण्डस्य किं स्यात्, इत्यत आह-एतमेव विदित्वा मुनिर्भवतीति । उक्तैरुपायैः बुद्धिद्वारा विविदिषोत्पत्तौ गुरुपादोपसर्पणश्रवणानुष्ठानचेत्यनेन क्रमेण 'एतमेव' मोक्षप्रकरणे मन्त्रब्राह्मणाभ्याम् उक्तलक्षणमात्मानमेव 'विदित्वा' साक्षात्कृत्य 'मुनिर्भवति' मननशीलो योगी भवतीत्यर्थः । एवमेवेत्यवधारणात् प्रत्यगात्मवेदनमेव मुनित्वहेतुः । न कर्मदेवताद्युपासनादिकम् । अतः अविद्याविरोधि अविवेककर्मत्यागिना सन्यासिनामेव मुनित्वं भवति न कर्मणा इति अर्थादुक्तं भवति । इदानीं अर्थोक्तं सन्यासं मुनित्वप्राप्त्यर्थमेकनिष्ठतया तं साक्षाद्वचनेन विदधाति—एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति । 'एतमेव' प्रकृतमात्मानं स्वं 'लोकं' अन्तःकरणशुद्धिद्वारा 'इच्छन्तः' आत्मानमिच्छन्तः विविदिषन्तः 'प्रव्राजिनः' प्रव्रजनशीला वैराग्यातिशययुक्ता मुमुक्षवः 'प्रव्रजन्ति' प्रकर्षेण सर्वाणि कर्माणि सन्यस्यन्तीति सन्यासो विधीयते । "आग्नेयोऽष्टाकपालो भवति" इतिवदित्यर्थः । 'एतमेव लोकमिच्छन्तः' इत्यवधारणात् बाह्यलोकत्रयेप्सूनां पारिव्राज्ये नाधिकार इति गम्यते । न हि गङ्गाद्वारं प्रति जिगमिषोः काशीनिवासिनः पूर्वाभिमुखगमनं साधनम् । "सोऽयं मनुष्यलोकः पुत्रेणैव जय्यः, नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोकः" (श. प. बृ. १४ । ४ । ३ । २४) इति श्रुत्या बाह्यलोकत्रयस्य पुत्रादिसाधनान्तरस्य नियमितत्वात् ॥ २९ ॥

( न्तंय ) एतद्ध स्म वै तत्पूर्वे ब्राह्मणाः । ( ऽ ) अनूचाना विद्वाꣳसः प्रजान्न कामयन्ते किम्प्रजया करिष्यामो येषान्नोऽयमात्माऽयं लोकऽ इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यञ्चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येतेऽएषणे एवऽभवतः ॥ २६ ॥

सऽएष नेति नेत्यात्मा । ( त्माऽ ) अगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गोऽसितो न सज्यते न व्यथतऽइत्यतः पापमकरवमित्यतः

---

एतत् ह स्म वै तत्पूर्वे ब्राह्मणाः अनूचाना विद्वांसः प्रजां न कामयन्ते । किं प्रजया करिष्यामः । येषां नः अयमात्मा अयं लोक इति । ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय, अथ भिक्षाचर्यं चरन्ति । या ह्येव पुत्रैषणा सा वित्तैषणा । या वित्तैषणा सा लोकैषणा । उभे ह्येते एषणे एव भवतः ॥ २६ ॥

स एष नेति नेत्यात्मा । अगृह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । असंगोऽसितो

---

ननु-अत्र कथं संन्यासे विधिरिति निश्चेतुं शक्यते " प्रव्रजन्तीति " वर्तमानोपदेशात् इति सत्यं अन्यथासिद्धार्थवदत्राश्रुतिविधिरेव निश्चेयः इत्यभिप्रेत्य तस्य विधित्वनिर्णयहेतुमर्थवादं दर्शयति-एतद्ध स्म वैतत्पूर्वे ब्राह्मणाः अनूचाना विद्वांसः प्रजां न कामयन्त इत्यादिना । ' ह स्म ' इत्येतौ ऐतिह्यार्थौ निपातौ वैशब्दः स्मरणार्थः । तत्तदिति पदाभ्यां तदेतदात्मलोकार्थिना पारिव्राज्ये कारणमुच्यत इति श्रुतं प्रतिज्ञायते । अत्र प्रजाशब्दः कर्मोपासनयोरप्युपलक्षणार्थः । तथा च-तदेतत् ... ' ह ' चि ' वै ' स्मर्यते । ' पूर्वे ' अतिक्रान्तकालिकाः ' ब्राह्मणाः ' जातिमन्तो वा ' अनूचानाः ' अनुवचनसमर्थाः ' विद्वांसः आत्मज्ञाः ' प्रजां ' तदुपलक्षिते कर्मविधे च ' न कामयन्ते स्म ' पुत्रादिसाधनानि नानुतिष्ठन्ति स्मेत्यर्थः । ननु-पुत्रादिसाधनं परित्यजतां तेषां कोऽभिप्रायः इत्यत आह-किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इतीति । ' येषां ' नोऽस्माकं परमार्थदर्शिनां ' अयं ' नित्यसन्निहितो अशनायादिवर्जित आत्मैव ' लोकः ' पुरुषार्थः । ते वयं ' प्रजया ' पुत्रकर्मापरविद्याभिर्लोकान्तरसाधनभूताभिः " किं करिष्यामः " । लोकान्तरहेतुपुत्रादिसाध्यं नैव परं नः इति पुत्रादिकमाश्रियन्तीत्यर्थः । इतिशब्दः अभिप्रायसमाप्तिद्योतकः । ननु-ते पूर्वे ब्राह्मणाः एवं साध्यसाधनव्यवहारं निन्दन्तः तस्माद्विनिवृत्य किं कृतवन्त इत्याकाङ्क्षायामाह-ते ह पुत्रैषणायाश्चेत्यादि-एषणे एव भवतः इत्यन्तं व्याख्यातम् । यस्मादेवं पूर्वे विद्वांसः प्रजादिभ्यो निवृत्ताः प्रव्रजिता एव । तस्मात् अधुनातना अपि प्रव्रजेयुरित्येवमर्थवादवाक्यं विधिवाक्यमन्तरेणानन्वयमयात् स्वसम्बन्धसिद्धये लोकमिच्छन्तः प्रव्रजन्तीत्यस्य संन्यासविधिवाक्यत्वं निश्चाययतीति सिद्धम् ॥ २६ ॥

नन्वेवमपि, आत्मलोकार्थिनः किमिति नियमेन पारिव्राज्यमेव विधीयते । कर्मणामपि तत्साधनत्वेनानुष्ठेयत्वादित्याशंकायां लयात्मकलोकस्य उत्पाद्यादिविलक्षणत्वेन कर्मासम्बन्धात् कर्मोऽदर्थिनः अनुष्ठेयमित्यभिप्रेत्याह-

कल्याणमकरवमित्युभेऽउभे ह्येषऽएते तरत्यमृतः साध्वसाधुनी नैनं कृताकृते तपतो नास्य केन चन कर्म्मणा लोको मीयते ॥ २७ ॥

तदेतदृचाऽभ्युक्तम् । (मे) एष नित्यो महिमा ब्राह्मणस्य न कर्म्मणा वर्द्धते नो कनीयान् । तस्यैव स्यात्पदवित्तं विदित्वा न कर्म्मणा लिप्यते पापकेनेति तस्मादेवंविच्छान्तो दान्तऽउपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानम्पश्येत्सर्वमेनम्पश्यति सर्वोऽस्यात्मा भवति सर्वस्यात्मा भवति सर्वम्पाप्मानन्तरति नैनम्पाप्मा तरति सर्वम्पाप्मान-

---

न सज्यते न व्यथते इति । अतः पापमकरवमिति । अतः कल्याणमकरवमिति उभे । उभे ह्येष एते तरत्यमृतः साध्वसाधुनी । नैनं कृताकृते तपतः । नास्य केन चन कर्मणा लोको मीयते ॥ २७ ॥

तदेतत् ऋचा अभ्युक्तम्–" एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्द्धते, नो कनीयान् । तस्यैव स्यात्पदवित् तं विदित्वा न कर्मणा लिप्यते पापकेन "–इति ।

---

स एष नेति नेत्यात्मेत्यादि–न व्यथत इत्यन्तम् । व्याख्यातार्थमेतच्छाकल्यब्राह्मणे । ननु–य एवं सर्वैषणाविनिवृत्तः स एष नेति नेत्यादिलक्षणमात्मानमात्मत्वेनावगम्य तद्रूपेणैव वर्तते । तस्य कर्मोपारभमाणस्य ब्रह्मविदः किं स्यादित्यपेक्षायामाह–अतः पापमकरवमित्यादि । 'अतः' अस्मान्निमित्तात् शरीरधारणादिहेतोः अविवेककृतात् रागादेः पापमशुभ्यं कर्म 'अकरवं' कृतवानस्मि । कष्टं खलु मम वृत्तम् । अनेन कर्मणा अहं नरकं प्रतिपत्स्ये इति कर्मकृतं परितापं पूर्वोक्तलक्षणं ब्रह्मविद् न तरति न व्याप्नोति । तथा 'अतः' फलविषयकामनिमित्तात् 'कल्याणं' यज्ञादिलक्षणं पुण्यं शोभनं कर्म 'अकरवं' कृतवानस्मि । अतः अहं देहान्तरे अस्य फलं सुखमुपभोक्ष्ये इत्येवंरूपोऽपि हर्षः तं न तरति न व्याप्नोतीत्यर्थः । इत्येवमुभे द्वे पापपुण्यफले कष्टहर्षरूपे तं न तरत इति शेषः । एवं यथोक्तात्मविदः तापहर्षासंस्पर्शे को हेतुरित्यपेक्षायां तमाह–उभे ह्येष एते तरत्यमृतः साध्वसाधुनी इति । 'अमृतः' अमरणधर्मा 'एषः' ब्रह्मवित् 'उभे एते' 'साध्वसाधुनी' पुण्यपापलक्षणे कर्मणी 'हि' निश्चितं 'तरति' अतिक्रामति । आरब्धानारब्धयोर्भोगज्ञानाभ्यां क्षीणत्वात् अपूर्वस्य चिकीर्षितत्वेनासंश्लेषादित्यर्थः । इत्थमात्मविदो धर्मादिसम्बन्धो नास्तीत्याह–नैनं कृताकृते तपत इति । नित्याद्यनुष्ठानं 'कृतं' तस्यैवाकरणम् 'अकृतम्' एते अपि 'कृताकृते' क्रमेण फलदानप्रत्यवायोत्पादाभ्यां अब्रह्मविदमिव 'एनं' ब्रह्मविदं 'न तपतः' नोद्वेजयत इत्यर्थः । किं च–नास्य केन चन कर्मणा लोको मीयत इति । 'अस्य' ब्रह्मविदः 'केन चन' केनापि 'कर्मणा' शास्त्रप्रतिषिद्धेनापि 'लोकः' पुरुषार्थः 'न मीयते' न हिंस्यते । " मीञ् हिंसायाम् " ( धा. पा. क्र्या. ड. ४ ) इति धातुः । ततश्च तत्त्वज्ञानात् प्राक्कालिकयोर्ज्ञानाग्निना भस्मीकरणादुत्तरकालिकयोस्तु अकर्तृत्वेनासंश्लेषात् शरीरारम्भकयोस्तु उपभोगेनैव क्षयात् ब्रह्मविदः कर्मकार्यसम्बन्धाभावात् न कर्मसम्बन्ध इति तात्पर्यार्थः ॥ २७ ॥

एवमुक्तं ब्रह्मविद्याफले मन्त्रं संवादयति–तदेतदृचाऽभ्युक्तमेष नित्यो महिमा ब्राह्मणस्येत्यादिना । तदेतद्ब्राह्मणेनोक्तं वस्तुजातं 'ऋचा' मन्त्रेणाभ्युक्तम् प्रकाशितम् । कथं 'ब्राह्मणस्य' ब्रह्मविदस्त्यक्तसर्वैषणस्य

२-१७ "अर्वादि" इति सूत्रमारभ्य "अनुनय" इत्येतत्सूत्रपर्यन्ता षोडशसूत्री ह्यादिपदेभ्यः परस्याख्यातस्य अनुदात्तस्वरविधायिका, इति निरूपणम्

१८-षोडशसूत्र्या "हि" एतत्सूत्रोदक्रमा पञ्चदशसूत्री नान्यपदादारभ्य आषोडशादक्षरात्परस्याख्यातस्यानुदात्तस्वरविधायिकेति निरूपणम्

१९-आपञ्चविंशादक्षरात्परस्याख्यातस्यानुदात्तस्वरत्वमिति भारद्वाजमतप्रदर्शनम्

२०-आद्वात्रिंशादक्षरात्परस्याख्यातस्यानुदात्तस्वरत्वमिति, औपशिविमतप्रदर्शनम्

२१-ह्यादिभिर्योगे सति ईषन्मर्यादाया भिन्नयोर्द्वयोर्बहूनामाख्यातानां वा पञ्चविंशत्यक्षरान्त द्वात्रिंशदक्षरान्त वानुदात्तस्वरो भवतीति विधानम्

२२-प्रागुक्तमर्यादास्थानि सर्वाण्यपि आख्यातानि ह्यादीनामन्यतमयोगे सति अनुदात्तानि भवन्ति, इत्यौपशिविमतप्रदर्शनम्

## तृतीयकण्डिकायां विषयाः।

१-६-विनियोगादिषु निमित्तेषु सत्सु पूर्वस्याख्यातस्य न विकारो भवतीति प्रतिपादनम्

७-ह्यादीनामन्यतमस्य योगे परिसमाप्त्यर्थत्वे च सति बहुष्वप्याख्यातेषु येनाख्यातेन तद्योगस्तस्याख्यातस्यानुदात्तो भवति, न समीपवर्तिनामन्येषामाख्यातानाम्। इति ह्याद्यन्वयाख्यातस्यानुदात्तत्वविधानं तदितरेषामाख्यातानामनुदात्तत्वनिषेधकरणं च

८-आख्यातसम्बन्धे सति यदजाद्यल्पाक्षं च द्विरुक्तं पदं तत्र यदेवादौ तस्य प्रकृतिस्वरकथनम्

९-अनाख्यातसम्बन्धे सति अजादि अनजादि च समसख्यमात्रं यत् द्विरुक्तं पदं तत्र पूर्वं पदं प्रकृतिस्वरवदेवेति निरूपणम्

१०-नामाख्यातोपसर्गनिपातात्मकं चतुर्विधं पदं मन्त्रे यथार्थं स्वरतो विद्यमानं तद्ब्राह्मणे मन्त्रस्वरादिपर्यस्तस्वरं भवति, इत्येतत्प्रतिपादनम्

११-ह्रस्वस्य दीर्घस्य च कण्ठ्यस्याकारस्य सवर्णे परे सति 'अर्' इत्यागमविधिनिरूपणम्

१२-स्वरयोरन्तरा वर्तमानस्य वकारस्य लोपो भवतीति प्रतिपादनम्

१३-उक्ताभ्यां स्वरसंस्कारनियमाभ्यामन्योऽनुक्तः स्वरसंस्कारनियमः व्याकरणप्रातिशाख्यादेः सामान्यशास्त्राद्बोध्य इति निरूपणम्

१४-अ, इ, उ, ऋ, ऌ, इत्येतेषां पञ्चानां वर्णानां प्रत्येकं अष्टादश भेदाः। ए, ऐ, ओ, औ, एतेषां चतुर्णां सन्ध्यक्षराणां ह्रस्वाभावात् द्वादशैव भेदा इत्यादिनिरूपणम्

१५-शाण्डिना माध्यन्दिना च ब्राह्मणस्वरः शतपथवत् इति प्रतिपादनम्

६-२५-"मन्त्र सामानि" इत्यारभ्य-"निषादः सप्त इति" इत्यन्तायां दशसूत्र्यां सामगानस्वरविधानम्

२६-चरकाणां ब्राह्मणस्वरे तन्मन्त्रसमानस्वरनिर्देशविधानम्

२७-चरकभेदानां खाण्डिकेयानां औखीयानां च ब्राह्मणे उदात्तोऽनुदात्तः स्वरितः प्रचितश्चेति चातुःस्वर्यं, कश्चित् त्रैस्वर्यमप्येतन्निरूपणम्

२८-तन्त्र्यभिलिप्तानामन्येषां बह्वृचतैत्तिरीयादीनां ब्राह्मणे तानः स्वर एवेति विधानम्

२९-छन्दोगानां बह्वृचानां च तानः स्वर एवेति विधानम्

इति त्रिकण्डिकाभाषिकसूत्रोक्तानां विषयाणाम् अनुक्रमणिका समाप्ता।

श्रीशः शरणम् ।

# भाषिकसूत्रविषये किञ्चिदावेदनम् ।

अयि विज्ञाः पाठकमहाभागाः ! भवद्धस्ते समाप्य सस्वरं समग्रं शतपथब्राह्मणं विन्यस्तम् । तस्य चाध्ययनाध्यापनं सस्वरमेवापेक्ष्यते । अन्यथा "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" इति । अत्र च मन्त्र इति पदं ब्राह्मणस्याप्युपलक्षणं वेदैकदेशत्वाद्ब्राह्मणस्येति । एवं च पाणिनीयशिक्षया दर्शितया दिशाऽर्थान्तरसमापनेन महती विपदापद्येत । किं बहुना स्वरसमुदायो वेदस्य वेदत्वावेदकः । तथा च ज्ञापितं पूर्वतन्त्रे कल्पसूत्राधिकरणे श्रीजैमिन्यृषिणा "प्रयोगशास्त्रमिति चेन्नासन्नियमात्" (जै. सू. १।३।४) "असांनियमात्स्वरैरनिबद्धत्वात्" इति हि तद्व्याख्याने श्रीशबरस्वामी व्याख्यत् । एतेनेदमुक्तं भवति—यत्र स्वरनिबद्धत्वं तत्रैव वेदत्वं, यत्र च तदभावस्तत्र वेदत्वाभावः । अनया चान्वयव्यतिरेकव्याप्त्या स्वरसंबद्धत्वं वेदत्वावेदकमिति सिध्यति ।

किंच स्वरसमुदायो वेदस्य सम्पद्रूपः । दर्शितं च स्वरः शतपथश्रुत्या "श्रीर्वै स्वरः" (श.प.११।४।२।१०) अत्र सायणः "(यः) उदात्तादिलक्षणः 'स्वरः' सः 'श्रीर्वै' वेदवाक्यस्य सम्पद्रूपः" इति व्याचख्यौ । शतपथब्राह्मणस्य स्वरसम्पत्तेर्यथार्थावबोधकं चैतद्भाषिकं सूत्रम् ।

अमुष्य सभाष्यभाषिकसूत्रस्य प्राथमिकं मुद्रणं काशिस्थचौखम्बासंस्कृतसीरिजयन्त्रालये सम्पन्नम् । परन्त्वत्र सूत्रभाष्योदाहरणानां मध्ये 'अन्यद्भुक्तमन्यद्वान्तम्' इव परस्परासम्बद्धता मर्मस्पृशा दृशा पश्यद्भिः प्रतिपदं स्पष्टैव प्रतिपद्यत एवेति । ततो नितरामुद्विग्नमानसा वयमत्र श्रममधिष्ठाय सूत्रभाष्यानुसारिणीं सरणिमुदाहरणानां यथाबोधं निर्देष्टुमुरीकृतयत्नाः कियतीं सफलतामुपगता इति सानुग्रहं समीक्षणेनैवास्य जानीयुस्तत्त्वविदो जनाः ।

तस्य भाषिकसूत्रस्य चाध्ययनमध्यापनं शतपथब्राह्मणसमकालमेव विधेयम् । अतस्तदन्त इदं भाषिकसूत्रं श्रीमदनन्तदेवभाष्यसवलितं संगृह्यते । तस्मात् यथावत्स्वरज्ञानं सम्पाद्य स्वरसहितं शतपथब्राह्मणं पठन्तु पाठयन्तु विज्ञाः पाठकमहाभागा इति तान्सम्प्रार्थये ।

कल्याणनगर्याम्
द्वि. श्रा. शु. १९ भौमे.
शके १८९१

विद्वद्वशंवदः—
श्रीक्षेत्रनासिकनिवासी धारेश्वरोपाह्वः
वैदिकतिलकश्रीमदण्णाशास्त्रिसूनुः
श्रीधरशर्मा.

॥ श्रीशः शरणम् ॥

अथ श्रीमन्महर्षिकात्यायनप्रणीतं

## अनंतदेवीयभाष्ययुतं

# भाषिकपरिशिष्टसूत्रं प्रारभ्यते ।



वन्दे विष्णुं सदानन्दं भक्तकल्पमहीरुहम् । यच्छायामाश्रितैर्लभ्यं नरैरर्थचतुष्टयम् ॥ १ ॥

कुपिताहिरुषा छाया सर्वेकल्याणदं सुखम् । भेजन्ते तत्पदं धीरास्तमनन्तं भजेऽन्वहम् ॥ २ ॥

याज्ञवल्क्यं मुनिं नत्वा कात्यायनमुनीनपि । व्याख्यास्ये भाषिकं सूत्रं कात्यायनमुनीरितम् ॥ ३ ॥

मन्त्रलक्षणभिन्नत्वाच्छतपथब्राह्मणस्य तु । तल्लक्षणाय मुनिना प्रणीतं भाषिकं खलु ॥ ४ ॥

तस्येदमादिमं सूत्रम्–

## अथ ब्राह्मणस्वरसꣳस्कारनियमः ॥ १ ॥

अथशब्दस्यानन्तर्यमर्थः । अथ मन्त्रलक्षणप्रणयनानन्तरं शतपथब्राह्मणस्वरसंस्कारनियमः क्रियत इति सूत्रशेषः । मन्त्रलक्षणानन्तर्यं चैतस्य भाषिकलक्षणस्य सूत्रकारग्रन्थाभावादेव ज्ञायते । तथा हि वक्ष्यति “ जात्यादिनिहितसेवमभिन्नाद्यावश्च ” ( भा सू १।१० ) इति सूत्रेण पूर्वसिद्धं जात्यादिकमनूद्य भाषिकसंज्ञाम्, तथा “ स्वरितानुदात्तौ च ” ( भा. सू. १।१४ ) इति सूत्रेण पूर्वसिद्धौ स्वरितानुदात्तावनूद्य ब्राह्मणे उदात्तं विधास्यति । तेन तदुपजीव्यत्वात्तदानन्तर्यमेतस्य साधुत्वम् ॥ १ ॥

## द्वौ ॥ २ ॥

ब्राह्मणे–उदात्तानुदात्तौ द्वावेव स्वरौ वेदितव्यौ ॥ २ ॥

## उक्तो मन्त्रस्वरः ॥ ३ ॥

ननु–मन्त्रलक्षणे प्रातिशाख्यस्य द्वितीयाध्यायादौ स्वरनियमस्याभिहितत्वात्तेदमारब्धव्यम्, निराकाङ्क्षत्वादित्यत आह–**उक्तो मन्त्रस्वर** इति । न च–पूर्वोक्तेनेदमन्यथासिद्धम्, पूर्वोक्तलक्षणस्य मन्त्रविभागविषयत्वात् । अतो नैराकाङ्क्ष्याभावादारभ्यमेवेदम् । किंच “ कण्ठ्य ऋकारे ह्रस्वम् ” ( प्राति. सू. ४।१९ ) इति विद्यमाने **यत्किञ्चर्तुषु क्रियते** ( मा. श. प. ब्रा. ११।२।७।२ ) **तदृषीणां तथा मनुष्याणाम्** ( मा. श. प. ब्रा. १४।४।२।२१ ) इति । तथा–“ यवयोः पदान्तयोः स्वरमध्ये लोपः ” ( प्राति. सू. ४।१२६ ) इति सूत्रे विद्यमाने **इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशावितिः** ( मा. श. प. ब्रा. १४।६।९।१ ) इति । तथा–**निगृह्णीयाविह ता विमुञ्चेति** ( मा. श. प. ब्रा. ४।४।१।१९ ) इत्येवमादौ संस्कारपैलक्षण्यदर्शनाचारभ्यमेवेदम् ॥ ३ ॥

१–प्रातिशाख्यस्यादिमे सूत्रे मन्त्रलक्षणेऽसाधारणच्छन्दःपदोपदानस्वरसाद्यादिकस्यादिमे सूत्रे वैदिकदेवतवचनब्राह्मणपदोपदानस्वरसंस्कारादिक प्रातिशाख्यस्य परिशेषभूतानीति प्रतीयते । ततश्चास्याध्ययनं प्रातिशाख्यस्याध्ययनानन्तरं कर्तव्यमित्यवबोध्यम् ॥

## तेनात्र सिद्धम् ॥ ४ ॥

ननु-'उक्तो मन्त्रस्वरः' इति न वक्तव्यम् । प्रकृते प्रयोजनाभावादित्यत आह-**तेनात्र सिद्धम्**-इति । तेन मन्त्रस्वरलक्षणेन सिद्धं स्वरमनूद्यात्र शतपथब्राह्मणे स्वरलक्षणं प्रणीतम् इति सूत्रशेषः ॥ ४ ॥

### अथ भाषिकसंज्ञाप्रक्रियालक्षणसूत्राणि ।

तत्रादौ संज्ञोच्यते-

## उदात्तानुदात्तौ भाषिकस्तत्संधिः ॥ ५ ॥

उदात्तश्चानुदात्तश्चेत्युदात्तानुदात्तौ पूर्वं कथितौ तयोः सन्धिस्तत्सन्निकर्षरूपः स भाषिकसंज्ञः स्यात् । संज्ञाप्रयोजनमुत्तरत्र ( भाषि. सू. १ । १२ ) भविष्यति । यथा-**अर्य्यमा । आयुः । मा नो मित्रो वरुणोऽर्य्यमाऽऽयुः** ( मा. श. प. १२।५।१।१७ ) तथा-**भासा । अन्तरिक्षम् । भासाऽन्तरिक्षमा पृण** ( मा. श. प. ९ । २ । ३ । १४ ) तथा-**गह्वरेष्ठाः । इमम् । गह्वरेष्ठोमम्** । ( क. श. प. ब्रा. ) इत्यादि स्वबुद्ध्या ज्ञेयम् । उदात्तग्रहणं किं ? **युक्ष्वा हि देवहूतमाँ२ । अश्वाँ२ । अग्ने । रथीरिव** । **युक्ष्वाहिदेवहूतमाँ अश्वाँ२ अग्ने रथीरिव** ... स्वाग्ने-( मा. श. प. ८ । ६ । ३ । २२ ) अत्र द्वयोरनुदात्तयोर्भाषिकसंज्ञा मा भूदिति । अनुदात्तग्रहणं किं ? **न । अयं । स्वर्यन्तो नापेक्षन्ते** ( मा. श. प. ब्रा. ९।२ । ३ । २७ ) अत्र द्वयोरुदात्तयोर्भाषिकसंज्ञा मा भूदिति । उदात्तानुदात्तौ किं ? **जातवेदः । अवाट् । त्वमग्न ईळितो जातवेदोऽवाट्** ( काण्व. श. प. ) अत्रानुदात्तोदात्तसन्निधाने भाषिकसंज्ञा । सन्धिरिति किं ? **भुवा । अनुकृत् । भुवाऽअसदन्निति** ( मा. श. प. १ । ३ । ४ । ११ ) का । इमम् । **काऽईमरे पिशङ्गिलेति** ( मा. श. प. १३ । ५ । २ । १८ ) अत्र-असन्धित्वान्न भाषिकसंज्ञा ॥ ५ ॥

अथेह कथं भवितव्यम्-**उदिवꣳ स्तभानान्तरिक्षम्** । ( मा. श. प. ब्रा. ३ । ६ । १ । १९ ) इत्यादावित्यत आह-

## अनुदात्तावन्तरेणोदात्तः ॥ ६ ॥

अनुदात्तोदात्तयोः पूर्वेणैकादेशः तस्मिन्सति-" उदात्तवानुदात्त " ( प्राति. सू. ४ । १४२ ) इत्युदात्त एव तत्र भवतीति सूत्रकृदेकादेशसन्धिर्भाषिकसंज्ञो भवतीत्युक्तवान् ॥ ६ ॥

### अथ भाषिकसंज्ञाया अपवादसूत्राणि ।

एवं भाषिकसंज्ञामुक्त्वा कंचिदपवादमाह-

## आग्रपूर्वं आख्यातपरो न ॥ ७ ॥

आग्र-उपसर्गो पूर्वो यस्य स आग्रपूर्वः । आख्यातं परं यस्य स आख्यातपरः । आग्रपूर्व आख्यातपरः उदात्तानुदात्तसन्धिर्भाषिकसंज्ञो न स्यात् । यथा-**आ । अप्राः । आप्रा द्यावापृथिवी** ( मा. श. प. ब्रा. ४ । ३ । ४ । १० ) प्र । **उक्षामि । अग्नये त्वा जुष्टं प्रोक्षामीति** ( मा. श. प. ब्रा. १ । १ । ३ । ११ ) प्र । **अर्पयतु । सविता प्रार्पयत्विति** ( मा. श. प. ब्रा. १ । ७ । १४ ) आग्रपूर्व इति किं ? **ध्रुवा । असि । ध्रुवाऽसीति** ( मा. श. प. ब्रा. ७ । ४ । २ । ५ ) **पूषा । असि । पूषाऽसीति** ( मा. श. प. ब्रा. १४ । २ । १ । ९ ) **यन्ता । असि । यन्ताऽसि** ( मा. श. प. ब्रा. ९ ।४।३।११ ) **कृता । असि । स्वधया कृताऽसीति** ( मा. श. प. ब्रा.१।१।२।१ )

...यानयर ...ति किं ? आ। अयम्। आयं गौः पृश्निरक्रमीत् (मा. श. प. ...) ...त। इदम्। आहेदमगन्म (मा. श. प. ...) ...। इषे। एपेपे मृगाय मा. श. प. ब्रा. ३। ४। २। २१) अत्र न निषेधः ॥ ७ ॥

## समासश्चानाख्यातपरोऽपि न ॥ ८ ॥

चकार आप्रयोरुपसर्गयोरनुकर्षणार्थः। आप्रपूर्वं समासेश्च अनाख्यातपरोऽपि न माविकसंज्ञं स्यात्। अनाख्यातग्रहणम्—आख्याताधिकारनिवृत्त्यर्थम्। अपिशब्द आख्यातपरो यदि समासे दृश्यते सोऽपि न माविकसंज्ञं स्यादित्येतदर्थम्। आ। इष्टाः। एष्टा रायः (मा. श. प. ब्रा. २। ४। ३। २१) आ समन्तात् एष्टा इति समासः। आ। इष्टयः। एष्टयो नाम (मा. श. प. ब्रा. ९। ४। १। १२)। प्र। इद्धः। प्रेद्धोऽअग्ने (मा. श. प. ब्रा. ९। २। ३। ४०) प्र। इत्यै। आ। इत्यै। प्रेत्याऽएत्यै (मा. श. प. ब्रा. ८। १। ४। ८) समास इति किं? आ। इदम्। एदम्बर्हिर्निषीदत (कण्व. श. प. ब्रा. ) प्र। इषे। प्रेषे मृगाय (मा. श. प. ब्रा. ३। ४। ३। २१) इति ॥ ८ ॥

## अपूर्वश्च समासो नेव ॥ ९ ॥

अ इति—ह्रस्वाकारो गृह्यते। तथा च—अकारः पूर्वो यस्य सन्धेः सोऽयमपूर्वः। तादृशसमासस्वधिर्न माविकसंज्ञः स्यात्। विश्व—आयुः। सर्व—आयुः। स नो विश्वायुः सप्रथाऽइति स नः सर्वायुः सप्रथाऽ इति (मा. श. प. ब्रा. १४। ३। १। १८) विश्व—आयुर्यस्येति बहुव्रीहिसमासः। तथा—शत—आयुषम्। शतायुषं कृणुहि चीयमानः (मा. श. प. ब्रा. ७। ५। २। १७) चित्र—ऊतयः। चित्रोतयो वामजाताः (मा. श. प. ब्रा. ७। १। १।३१) वृद्ध—आयुम्। वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः (मा. श. प. ब्रा. २। ६। १। २४) अपूर्व इति किं? दिवि—इव। दिवीव चक्षुराततम् (मा. श. प. ब्रा. ३। ७। १। १८) ह्रस्वपूर्व इति किं? माता—इव। मातेव पुत्रम्पृथिवी (मा. श. प. ब्रा. ७। १। १। ४६) पिता—इव। स नः पितेव सूनवेऽग्ने (मा. श. प. ब्रा. २। ३। ४। ३०) स्वसा—इव। स्वसेव शिक्षीणावहे (मा. श. प. ब्रा. २। ५। २। १७) समास इत्यनुवर्तमाने पुनः समासग्रहणम्—अकारपूर्वसंधिमात्रप्रतिपत्त्यर्थम्। तेन—इह—इह। इहेहैषां कृणुहि भोजनानि (मा. श. प. ब्रा. ९। ५। ४। २४) इत्यादि सर्वमुदाहरणं ज्ञातव्यम्। नशब्दः एवशब्दश्चावधारणार्थौ। नेव ब्राऽइदमग्रेऽसदासीन्नैव सदासीत् (मा. श. प. ब्रा. १०। ५। ३। १) नेत्यनुवर्तमाने पुनर्नेति वचनमुत्तरत्र प्रतिषेधनिवृत्त्यर्थम्। इति ॥ ९ ॥

## जात्याभिनिहितक्षैप्रप्रश्लिष्टाश्च ॥ १० ॥

चशब्दो माविकसंज्ञानुकर्षार्थः। जात्यादयश्चत्वारः स्वरिता माविकसंज्ञाः स्युः। तल्लक्षणानि तु पूर्वमेवाभिहितानि। "एकपदे नीचपूर्वः सयवो जात्यः" (प्राति. सू. १।१११) "एदोद्भ्यामकारो लुप्तमभिनिहितः"

---

१—समासश्चात्र आपूर्वः प्रपूर्वः सुबन्तेन कृदन्तेन वा सह मन्तव्यः।
२—अस्योदाहरणमन्वेष्टव्यम्।
३—नेत्युदात्तम्। इवेत्यनुदात्तम्। तत्सन्धिर्माविक इति यावत्।

( प्राति. सू. १।११४ )" युवर्णौ यवौ क्षैप्र. " ( प्राति. सू. १।११५ )" इवर्ण उभयतो ह्रस्वः प्रश्लिष्टः " ( प्राति. सू. १।११६ ) इति । क्रमेणोदाहरणानि तत्र जात्यो यथा—धान्यमसि धिनुहि ( मा. श. प. ब्रा. १।२।१।१८ ) भूर्भुवः स्वरिति तया समृद्ध्याऽऽशिषमाशास्ते सुप्रजाः ( मा. श. प. ब्रा. २।३।५।१ ) अभिनिहितो यथा—प्रसुवेऽश्विनोर्बाहुभ्याम् ( मा. श. प. ब्रा १।१।२।१७ ) पूष्णेऽग्नये स्वाहेति ( मा. श. प. ब्रा ३।१।४।१४ ) वेदोऽसि येन त्वम् ( मा. श. प. ब्रा १।९।२।२३ ) कोऽसि कतमोऽसि ( क. श. प. ब्रा. ) क्षैप्रो यथा त्र्यम्बकं यजामहे ( मा. श. प. ब्रा. २।६।२।१२ ) द्रवन्नः सर्पिरासुतिरिति (मा. श. प. ब्रा. १।६।२।१४) इत्यादि । प्रश्लिष्टो यथा मधुन्धेऽ आङ्गिरस्वद्भीन्धनामुखे ( मा. श. प. ६।५।४।९ ) त्रिविष्टुप् सुभूतमम् ( मा. श. प. ब्रा. १।७।१।१८ ) जात्यक्षैप्रयो " स्वरितानुदात्तो च " ( भाषि. सू. १।२४ ) इत्यनेनैवोक्तत्वाद् भिन्नेऽपि पुनर्ग्रहणं पूर्वस्य नियं नसिद्ध्यर्थम् । अभिनिहितप्रश्लिष्टयोरनुदात्तानुदात्तसन्निपाताद् भाषिकसंज्ञाया प्राप्ताया अन्यत्र भाषिकसंज्ञाया अनित्यत्वज्ञापनार्थं पुनर्ग्रहणम् । तेनात्र न भवति । सवितासि सत्यप्रसवऽ इति ( मा. श. प. ब्रा. ५।४।४।९ ) इत्था हि सोमऽइन्मदेऽवितासि सुन्वतो वृक्तबर्हिषऽइति ( मा. श. प. ब्रा. १३।५।१।९ ) आहमजानि गर्भधम् ( मा. श. प. ब्रा. १३।२।८।५ ) इति ॥ १० ॥

## उतो यो मो नो सो च ॥ ११ ॥

उतो यो मो नो सो इत्येतेषां पञ्चानामोकारो भाषिकसंज्ञः स्यात् । यथा—एतत्त्वमस्करोरुतो तऽइन्द्र त्वमः ( मा. श. प. ब्रा. ५।१।१।१४ )—यो मम तनूरेषा सा त्वयि ( मा. श. प. ब्रा. ३।४।३।९ ) मोऽहं तव वीर्यं विदेय ( मा. श. प. ब्रा. १।३।१।१२ ) नोऽपचारात्साधुना कनीयान् ( क. श. ब्रा. ) सोऽदेवोऽभवत् ( कण्व. श. प. ब्रा. ) इति ॥ ११ ॥

## ओमेकेषाम् ॥ १२ ॥

ओङ्कारश्च केवलो भाषिकसंज्ञः स्यात्, एकेषामाचार्याणां मतेन । एकशब्दोऽनेकदेशवचनो, न मुख्यवचनः । तेन कण्वाचार्यमते न भाषिकसंज्ञ इत्यर्थः । यथा—समुद्रशालमुरण्योः श्रावयेति ( कण्व श. प. ब्रा. ) बोधयन्तातिथिभीऽअस्मिन् ( कण्व श. प. ब्रा. ) एकेषां किं । काण्वाना मा भूदिति । ता वाऽएताः पञ्च व्याहृतय ओ३म् श्रावयास्तु श्रौषट् यज ये यजामहे वौषट् ( कण्व श. प. ब्रा. ) इति ॥ १२ ॥

### अथ भाषिकसंज्ञाप्रयोजनप्रकरणम् ।

अथेदानीं भाषिकसंज्ञाप्रयोजनमाह—

## उदात्तमेतत् ॥ १३ ॥

यदेतत् " उदात्तानुदात्तो " ( भाषि. सू. १।४ ) इत्यादिप्रबन्धेन भाषिकसंज्ञमुपक्रान्तं तदुदात्तं

---

१–निपातो नाम–अनुदात्त इत्यर्थः ।

स्यात्–वाक्ये । यथाक्रममुदाहरणानि । यथा–मा नो मित्रो वरुणोऽअर्य्यमाऽऽयुः ( मा. श. प. ब्रा. १३ । ५ । १ । १७ ) मासाऽन्तरिक्षमा पृण ( मा. श. प. ब्रा. ९ । २ । ३ । ३४ ) मित्रा नाहं वृणे सुमतिम् ( मा. श. प. ब्रा ९ । २ । ३ । ८ )–सिꣳहे सेमं पात्वꣳहसः ( मा. श. प. ब्रा. १२ । ७ । ३ । २१ )–धान्यमसि धिनुहि ( मा. श. प. ब्रा. १ । २ । १ । १८ )–भूर्भुवः स्वरिति त्वया समृद्ध्याऽऽशिषमाशास्ते सुमङ्गः ( मा. श. प. ब्रा. २ । २ । १ । १ )–प्रसवेऽश्विनोर्बाहुभ्याम् ( मा. श. प. ब्रा. १ । १ । २ । १७ ) वेदोऽसि येन त्वम् ( मा. श. प. ब्रा. १ । ९ । २ । २३ )–त्र्यम्बकं यजामहे ( मा. श. प. ब्रा. २ । ६ । २ । १२ )–इयन्नः सर्पिरासुतिरिति ( मा. श. प. ब्रा. ६ । ६ । २ । १४ )–अग्निरस्तुभीन्धता-मुखे ( मा. श. प. ब्रा. ६ । ९ । ४ । ९ ) इति ॥ १३ ॥

## स्वरितानुदात्तौ च ॥ १४ ॥

मन्त्रविषये यौ स्वरितानुदात्तावुक्तौ तावपि शतपथब्राह्मणे उदात्तौ स्तः । तत्र स्वरितो यथा स्वधेना-ग्राचयत्प्रकृत्कर्म्म कर्म्मकृत इति ( मा. श. प. ब्रा. २ । ५ । २ । २९ )–वाजस्याजावन वाजिनो नः ( मा. श. प. ब्रा. ५ । १ । ५ । २४ )–अग्ने नय सुपथा रायेऽअस्मान् ( मा. श. प. ३ । ६ । ३ । ११ )–एष ते रुद्र भागऽआखुः । ( मा. श. प. ब्रा. २ । ६ । [illegible] )–एष ते निर्ऋते भागस्तञ्जुषस्व । ( मा. श. प. ब्रा. ५ । २ । ३ । )–वहु [illegible] भगाभ-क्षेति । ( मा. श. प. ब्रा. २ । ५ । २ । २९ ) इति ॥ १४ ॥

## उदात्तमनुदात्तमनन्त्यम् ॥ १५ ॥

मन्त्रधर्मेण यदुदात्तमभिहितं तच्छतपथब्राह्मणेऽनुदात्तं स्यात् । अनन्त्य[illegible]मन-न्त्यम् । अनवसितमित्यर्थः । यथा–इडे रन्ते हव्ये काम्ये चन्द्र ज्योतेऽदिते सरस्वति महि विश्रुति । ( मा. श. प. ब्रा. ४ । ५ । ८ । १० )–स्वान भ्राजाङ्घारे बम्भारे हस्त [illegible] । ( मा. श. प. ब्रा. ३ । ३ । ३ । ११ )–चक्षुर्मित्रस्य वरुणस्याग्नेः । ( मा. श. [illegible] ) विश्वानि देव वयुनानि विद्वान् । ( मा. श. प. ब्रा. ३ । ६ । ३ । ११ )–[illegible] मनीषा । ( कण्व. श. प. ब्रा. ) इति ॥ १५ ॥

## अन्त्यꣳ सꣳहितानाम् ॥ १६ ॥

द्वयोर्बहूनामुदात्तानामेकत्र युक्तानां पौर्वापर्य्येणावस्थितानां [illegible] स्यात् । पूर्वेषामुदात्तानां स्वरविशेषानुपदेशात्मन्त्रवदेव भवति । यथा–[illegible] श. प. ब्रा. १३ । १ । ९ । १ )–व्रते तवानागसोऽअदितये स्यामेति । ( [illegible] १ । ७ । ३ । ८ )–लाजीꣳ३ छाचीꣳ३ न्यव्ये गव्यऽ इति । ( मा. श. प. ब्रा. [illegible] । ६ । ( )–आ या द्यामभास्या पृथिवीम् । [1] ( मा. श. प. ब्रा. ८ । ७ । २ । १६ )–[illegible] ये तव । ( मा. श. प. ब्रा. ७ । ५ । १ । ३३ ) इत्यादि विस्तरम् ॥ १६ ॥

१–मन्त्रे मन्त्रसमानार्थे स देवतायामित्यर्थः ।

अथेदानीं भाषिकसञ्ज्ञे परे विशेषमाह—

## भाषिके चोभयेषाम् ॥ १७ ॥

" उदात्तानुदात्तौ भाषिकमन्त्रसन्धि "–( भाषि. सू. १ । ४ ) इत्यादिना भाषिक उक्तः । तस्मिन्परे–उभयेषामुदात्तानामनुदात्तानां चानुदात्त एव स्यात् । तत्रोदात्तानां यथा–चित्रामाहं वृणे सुमतिम् । ( मा. श. प. ब्रा. १।२।३।२८ )–सिंहहं इमेमं पात्वहं हसः । ( मा. श. प. ब्रा. १२।७।३।२१ ) मासान्तुष्टिक्षमापृण ( मा. श. प. ब्रा. ५।२।३।३४ ) मा नो मित्रो वरुणोऽ अर्यमायुः ( मा. श. प. ब्रा. १३।५।११।१७ ) धान्यमसि धिनुहि ( मा. श. प. ब्रा. १।२।१।१८ ) पवित्रे स्थो वैष्णव्याविति ( मा. श. प. ब्रा. १।१।३।१ ) अभित्यन्देवं सवितारमोण्योः ( मा. श. प. ब्रा. ३।३।२।१२ ) तास्वेनं प्रच्यावयाति निग्राभ्या स्थ ( मा. श. प. ब्रा. ३।९।४।७ ) पयस्पा बृहस्पतये ( कण्व. श. प. ब्रा.            ) स्तस्ऽइषुस्याः ( कण्व. श. प. ब्रा.            ) इत्यादि । मन्त्रलक्षणेनानुदात्तत्वे सिद्धेऽपि पुनरनुदात्तादिविधानं " स्वरितानुदात्तौ च " ( भाषि. सू. १।१४ ) इत्यस्यापवादार्थम् ॥ १७ ॥

## एकस्यापि ॥ १८ ॥

एकशब्दोऽत्र उत्तमपदवचनः । आम्यर्थंक इतिवत् । तदन्यश्च स्वरित एव । तथा चोदात्तानुदात्ताभ्यामेकोऽपरः स्वरितस्तस्यापि भाषिके परेऽनुदात्तादेशः स्यात् । यथा नमो भूत्यै येदं चकारेति ( मा. श. प. ब्रा. ७।२।१।१० ) पुष्टा रायः प्रेषे भगाय ( मा. श. प. ब्रा. ३।४।३।२१ ) भूर्भुवः स्वरिति ( मा. श. प. ब्रा. २।२।४।१ ) स्वरितस्योदात्तानुदात्तोभयसम्प्रयोगे जाते " भाषिके चोभयेषाम् " ( भाषि. सू. २।१७ ) इत्यनेनैव निघाते सिद्धेऽपि यदारभ्यते पुनस्तज्ज्ञापयति निहन्यमानोऽपि केनचित्प्रकारेण केनचित्सितैनात्र स्वरित एवेति ॥ १८ ॥

किमेतस्य ज्ञापने प्रयोजनमित्युच्यते–

## स्वरितस्य चाभिनिहितत्वम् ॥ १९ ॥

स्वरितस्वरस्य भाषिकस्याभिनिघात स्यात् । एवं निघातेऽपि सति स्वरितत्वं स्वरितस्य चाभिनिहितत्वम् । अभिनिहितस्य भाषिकसञ्ज्ञा भवतीति भावः । यथा प्रसुवेऽश्विनोर्बाहुभ्याम् ( मा. श. प. ब्रा. १।१।२।१७ ) पूष्णऽउत्यस्यै ह्येनं पृष्ठऽआधत्तेऽग्निमग्नाऽमशाद्याग्राद्धाऽइति ( मा. श. प. ब्रा. २।१।४।२८ ) सरस्वत्यै पूष्णेऽग्नये स्वाहेति ( मा. श. प. ब्रा. २।१।४।९ ) इति ॥ १९ ॥

## तेषां च प्रागुत्तमादनन्तराणां च कम्पनम् ॥ २० ॥

तेषां च प्रागुक्तानां बहूनां पौर्वापर्येणावस्थितानामुत्तमात्पूर्वेषामनन्तराणां जात्यन्तरेणाव्यवहितानामनुदात्तानां कम्पनं स्यात् । कम्पनं नाम–अनुदात्तादपि–अनुदात्तत्वम् । यथा–प्रतिष्ठापयाति सुपर्णाङ्कैः स्वाहेति

---

१–' चित्रमाहम् ' इत्यत्र ' मा–अहम् ' इति सन्धौ भाषिके परे ' मा ' इत्यस्यानुदात्तत्वम् ।

२–सम्यग्भापि निघाते स्वरितनिघातेनैव स्वरितनिवृत्तिः । तत्र भाषिकसञ्ज्ञालाभः । तेन स्वरितेऽपि परे पूर्वस्यानुदात्तत्वम् इति भावः । निघातोऽनुदात्त इति वार्त्तान्तरम् ॥

(मा. श. प ब्रा. ९ । ४ । २ । १९ । २०)-यद्वैवोद्वेत्यथ वसन्तः (मा. श. प ब्रा. २ । २ । ३ । ९)-श्रद्धा हि नयन्मुन्नोऽद्धा तद्यदात्मा (मा श प ब्रा. २।३।१।२९)-आदित्यो ह त्वेवैषोऽग्निश्चितः (मा. श. प. ब्रा. १० । ६ । ४ । ४)-सैषा त्रय्येव विद्या तपति (मा श प. १० । ३ । ४ । २)-एकस्त्वेकेष्टकः (मा. श. प. ब्रा. १० । ३ । ४ । २२)-सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् (मा. श. प. ब्रा । १४ । ४ । २ । १) इत्यादि ॥ २० ॥

## उदात्तपूर्वस्यानुदात्तस्य च ॥ २१ ॥

उदात्तं पूर्वं यस्यानुदात्तस्य सोऽयमुदात्तपूर्वं । तादृशानुदात्तस्य भाषिके परे कम्पन स्यात् । यथा–किश्चन–ग्राममुत । मा भेर्मा संविक्था ऊर्जं धत्स्व मा नः किञ्चनाममदिति (मा. श. प. ब्रा. ९ । १ । १ । २४) द्याम् । उत । इमाम् । स दाधार पृथिवीन्द्यामुतेमामिति (मा श. प. ब्रा. ७ । ४ । १ । १९) इति ॥ २१ ॥

## उदात्तपूर्वस्य स्वरितस्यापि च ॥ २२ ॥

उदात्तं पूर्वं यस्य स्वरितस्य स उदात्तपूर्वं । तादृशस्य स्वरितस्यापि भाषिके परे कम्पनं स्यात् । अनुदात्ततरत्वं भवतीत्यर्थः । यथा–नमो भूत्यै येदं चकारेति (मा. श प. ब्रा ७ । २ । १ । १७)–पुष्टा गावः पयः प्रजाय (मा. श प. ब्रा. १ । ४ । २ । २१) इति ॥ २२ ॥

## अन्त्यान्त्यस्योदात्तस्यानुदात्ततां प्रत्येके विवदन्ते ॥ २३ ॥

इति श्रीभगवतः कात्यायनस्य कृतौ भाषिकपरिशिष्टसूत्रे प्रथमा कण्डिका परिसमाप्ता ॥ [१]

अन्त्यान्त्यस्योदात्तस्य सत –अनुदात्ततां प्रत्येके आचार्या विवदन्ते । एकशब्दोऽत्र मुख्यवचनः । तेन काण्वानां मतमिदमिति गम्यते । यथा–" तस्मात्कुर्भर्द्वैतस्य पुरुषस्य बाहू " (काण्व. श. प. ब्रा. ) रोहुनाऽस्य प्राणादपानती (काण्व. श प ब्रा. ) इत्यादि ॥ २३ ॥

इति श्रीकण्वशाखिनागदेवसुतश्रीमदनन्तदेवविरचिते भाषिकपरिशिष्टसूत्रभाष्ये प्रथमा कण्डिका परिसमाप्ता ॥ [१]

---

### अथ द्वितीया कण्डिका ।

### अथ मन्त्रगतानामाख्यातानां स्वरविकारप्रकरणम् ।

## अथाख्यातपदविकरणाः ॥ १ ॥

आख्यातं च तत्पदं चेति विग्रहः । तस्य विकरणा विकारा आख्यातपदविकरणाः । के पुनस्ते ? "हि" (भाषि. सू. २ । ४) इत्यादयो वक्ष्यमाणाः । अथशब्दोऽत्राधिकारान्तरज्ञापनार्थः । ब्राह्मणाधिकारो निवृत्तः । अथेदानीं मन्त्रभागसमाम्नाये आख्यातपदविकरणा व्याख्यास्यन्ते । आख्यातपदलक्षणमन्यत्रोक्तं–" क्रिया

---

१–अनया कण्डिकया शतपथब्राह्मणे मन्त्रान्तरेषु स्वराः केवलं प्रदर्शिताः स्युः ॥

वाचकमाख्यातं लिङ्गतो न विशिष्यते । त्रीनत्र पुरुषान्वक्ति कालतस्तु विशिष्यते " इति । कः पुनराख्यातपदस्य विकारः ?। (मन्त्रे) अनाख्यातात्परस्याख्यातपदस्यानुदात्तत्वमविकारः । शेषो विकारः । ननु—प्रातिशाख्ये एव—" प्रकृत्याऽऽख्यातमाख्यातपूर्वम् " ( प्राति. सू. ६ । ११ ) इति प्रकृत्य—आख्यातपदविकरणमुक्तम् । एवं सति हि पुनर्वचनमनर्थकमिति चेदत्रोच्यते । तत्राभिनिहितेभ्योऽधिका एव वक्तव्याः । ते यदि शुद्धा अभिधीयेरँस्तदाऽभिनिहितानां परिसंख्यानमाशङ्क्येत । अतस्तदोषं परिजिहीर्षुराचार्योऽभिनिहितानभिनिहितत्वसाधारणलक्षणं करोति स्म ॥ १ ॥

## अर्थादिः ॥ २ ॥

अर्थस्यादिरर्थादिः । अर्थादौ वर्तमानमाख्यातमनुदात्तं विकारं प्राप्नोति । यथा—भवत्यात्मना पराऽस्य द्विषन्भ्रातृव्यः । (मा. श. प. ब्रा. १४ । ४ । १ । ८)—सन्धेत घृतश्चोत्राऽस्त्व त्वत् । (मा. श. प. ब्रा. १ । ६ । २ । ९)—स्याद्वेव प्रायश्चित्तिः । ( मा. श. प. ब्रा.                    ) भवति हास्य सुवर्णम् । ( मा. श. प. ब्रा. १४ । ४ । १ । २ ) इति ॥ २ ॥

## पादादिः ॥ ३ ॥

पादस्यादिः पादादिः । पादादौ विद्यमानमाख्यातं विक्रियते । यथा—ददातु । ददातु देव्यो जनः (मा. श. प. ब्रा. २ । ६ । १ । १९ ) । तथा—अगन्महि । अगन्महि मनसा सᳪ शिवेन । (मा. श. प. ब्रा. १ । ९ । ३ । ६ ) । योजं । योजा न्विन्द्र ते हरीऽइति । ( मा. श. प. ब्रा. २ । ६ । १ । ३८ ) इति ॥ ३ ॥

## हि ॥ ४ ॥

'हि' शब्दात्परमाख्यातं विक्रियते । यथा—आपो हि ष्ठा मयोभुवऽ इति (मा. श. प. ब्रा. ६ । ९ । १ । ३ ) हि हीमिद्धोऽभ्युपयष्टीति । (मा. श. प. ब्रा. ६ । ७ । २ । ३ )—शिरो हि प्रथमं जायमानस्य जायते । ( मा. श. प. ब्रा. ८ । २ । ४ । १८ ) 'हि' शब्दात्पूर्वमपीति वक्तव्यम् । इन्दवो वामुशन्ति हि । ( मा. श. प. ब्रा. ४।१।३।१९ ) इति ॥ ४ ॥

## हन्त ॥ ५ ॥

'हन्त' शब्दात्परमाख्यातं विक्रियते । यथा—हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति । (मा. श. प. ब्रा. १४ । ८ । ३ । २ )—हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि । ( मा. श. प. ब्रा. १४ । ६ । ८ । १ )—हन्तैनमन्नाद्योपमाह्वयामहऽइति । ( मा. श. प. ब्रा. ११ । २ । २ । ५ )—हन्तास्येन्द्रियं वीर्यᳪ सोमपीथमन्नाद्यᳪ हराणीति । ( मा. श. प. ब्रा.                    ) अत्र परत्वमर्थतो द्रष्टव्यम् ॥ ५ ॥

---

१—लिङ्गमिति सत्याया अप्युपलक्षणम् । लिङ्गकर्म हि वाचा हि सङ्ख्या क्रिया न विशिनष्टि, किन्तु कालमेव । तदुक्तं हरिणा—" क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिका " इति । क्रियाभेदाय— क्रियां भेदं विशेषयितुं स्वेन रूपेण रूपयितुं कर्तुं, कालस्तु—काल एव न सङ्ख्यादिः । सर्वस्येति क्रियाभिधायकनामार्थस्येत्यर्थः । कालस्त्विति पुनः सङ्ख्याद्यक्रियाभेदकत्वं स्यादित्यैकार्थ्यम् ॥

## नेत् ॥ ६ ॥

'नेत्' इत्यस्मात्परमाख्यातं विक्रियते । यथा—**नेत्त्वदपचेतयाताऽइति** । (मा. श. प. ब्रा. १ । ८ । ३ । २२)—**नेदुन्योऽन्यं हिनसातऽइति** । (मा. श. प. ब्रा. १ । १ । ४ । २०)—**नेद्गतिरेचयानीति** । (मा. श. प. ब्रा. १०।४।१।१९) इति ॥ ६ ॥

## कुवित् ॥ ७ ॥

'कुवित्' इत्यस्मात्परमाख्यातं विक्रियते । यथा—**कुविदङ्ग यवमन्तो यवञ्चिद्यथा दान्ति** । (मा. श. प. ब्रा. ९ । ९ । ४ । २४)—**कुविन्मे पुत्रमवधीदिति** । (मा. श. प. ब्रा. ९ । ४ । ४ । ७)—**कुविन्मेऽनुपहूतः सोममपभक्षादिति** । (मा. श. प. ब्रा. १।६।३।८) इति ॥ ७ ॥

## अह ॥ ८ ॥

'अह' इत्यस्मात्परमाख्यातं विक्रियते । यथा—**नक्षत्रमाहास्य भवति** (मा. श. प. ब्रा. ) **अग्रमहुतस्य भवति** (मा. श. प. ब्रा. ) इत्यादि ॥ ८ ॥

## समुच्चये ॥ ९ ॥

समुच्चयार्थाच्चकारात्परमाख्यातं विक्रियते । यथा—**शर्म्म च स्थो वर्म्म च स्थः इति** (मा. श. प. ब्रा. १ । ४ । १ । १०) **युक्ष्मा चासि शिप्रा चासीति** (मा. श. प. ब्रा. १ । २ । ६ । ११) इति ॥ ९ ॥

## आमन्त्रितसस्वरम् ॥ १० ॥

स्वरेण सह वर्त्तत इति सस्वरम् । आमन्त्रितं च तत्सस्वरं च आमन्त्रितसस्वरम् । आद्युदात्तमित्यर्थः । आमन्त्रितसस्वरात्परमाख्यातं विक्रियते । यथा—**मघवन्वन्दिषीमहि** (मा. श. प. ब्रा. २ । ६ । १ । १८) **अग्ने युक्ष्वा हि ये तव** (मा. श. प. ब्रा. ७ । ९ । १ । ३१) **अग्ने भरन्तु चित्तिभिरिति** (मा. श. प. ब्रा. १ । ८ । १ । ७) **अग्ने नय सुपथा राये** (मा. श. प. ब्रा. २ । ६ । ३ । ११) **अग्ने पवस्व स्वपाऽ अस्मे** (मा. श. प. ब्रा. ४ । ९ । ४ । ९) इत्यादि ॥ १० ॥

## जिज्ञासितम् ॥ ११ ॥

ज्ञातुमिष्टं जिज्ञासितम् । जिज्ञासितमाख्यातं विक्रियते । यथा—**कथमस्यैषा व्युष्टोऽङ्गिरा सम्वत्सरमग्निमाप्नोति** (मा. श. प. ब्रा. ९ । ३ । ३ । १८) **कथम्मद्गुतोक्थेन सम्पद्यते** (मा. श. प. ब्रा. ९ । ३ । ३ । १९) इति ॥ ११ ॥

## विचारितम् ॥ १२ ॥

विचारविषयकमाख्यातं विक्रियते । यथा—**अधः स्विदासी३दुपरि स्विदासी३त्** (काण्व. श. प. ) **तदाहुः कथं कुर्य्यादिष्ट्वा यज्ञपथया यजेता३ न यजेता३ इति** (मा. श. प. ब्रा. ११ । १ । ६ । ४) इति ॥ १२ ॥

## अवधारितम् ॥ १३ ॥

अवधारणार्थकमाख्यानं विक्रियते । यथा–युक्तेन हैव नु इयन्यदपक्रमणं भवति ( मा. श. प. ब्रा. ११ । ३ । ५ । ४ ) इति ॥ १३ ॥

## यद्योगः ॥ १४ ॥

यच्छब्दस्य योगो यद्योगः । स च यच्छब्दः सर्वत्रान्यपरान्तो गृह्यते । यद्योगे सत्याख्यानं विक्रियते । यथा–त्रिधा यद्वजं स्पृधऽइति ( मा. श. प. ब्रा. १२ । ७ । ३ । ४ )–योऽस्मान्द्वेष्टि यश्च वयं द्विष्मऽइति ( मा. श. प. ब्रा. ३ । ८ । ५ । ११ )–यत्रा नियुद्भिः सचसे शिवाभिः ( काण्व. श. प. ब्रा.            )–यतरो नो वर्षीयः परापश्यात् ( मा. श. प. ब्रा.            ) यतरो वै संयत्तयोः पराजयते ( मा. श. प. ब्रा. १ । २ । ३ । ६ )–यतंद्युदं स्कन्नित ( मा. श. प. ब्रा.            )–यतरथा कामयते ( मा. श. प. ब्रा.            )–यतमथा कामयेत ( मा. श. प. ब्रा.            )–यादृशाद्धै जायते ( मा. श. प. ब्रा.            ) इत्यादि ॥ १४ ॥

## विनियोगः ॥ १५ ॥

विनियोगार्थमाख्यानं विक्रियते । विनियोगो नाम–मन्त्रादिभिर्देवनादिस्वपदार्थादिन्यासकः । यथा–स ध्रुवा इन्द्राग्निभ्यामुपदधाति ( मा. श. प. ब्रा. ८ । २ । १ । ४ )–विश्वकर्म्मणाऽऽसादयति । ( मा. श. प. ब्रा. ८ । २ । १ । ४ )–तूष्णीं दर्भस्तम्बमुपदधाति ( मा. श. प. ब्रा. ७ । २ । ४ । २९ )–स्रुचाऽभिजुहोति ( मा. श. प. ब्रा. ७ । २ । ४ । २९ )–तूष्णीमुदचमसान्निनयति ( मा. श. प. ब्रा. ७ । २ । ४ । २९ )–स्रुचा सुपति ( मा. श. प. ब्रा. ७ । २ । ४ । २९ ) इत्यादि ॥ १५ ॥

## वाक्यशेषः ॥ १६ ॥

वाक्यशेषो यस्मिन्नाख्याते उपलभ्यते तदाख्यानं विक्रियते । यथा–अथ प्रातराग्नेयः पुरोडाशो भवत्यैन्द्रं सान्नाय्यम् ( मा. श. प. ब्रा. २ । ४ । ४ । १२ )–द्वावुत्तरस्यां वेद्यां प्राञ्चौ भवतो द्वौ दक्षिणस्याम् ( मा. श. प. ब्रा. १२ । ८ । ३ । ६ )–त्रिणो गार्हपत्यो भवत्युचितऽआहवनीयः ( मा. श. प. ब्रा. ७ । २ । ५ । १ ) इति ॥ १६ ॥

## अनुबन्धः ॥ १७ ॥

अनुबध्यतेऽनेनेत्यनुबन्धः । आख्यानार्थस्य नित्यतां यः शब्दो ब्रवीति सोऽनुबन्धः । तस्मात्तदाख्यानं विक्रियते । यथा–श्वः श्वः श्रेयान्भवति ( मा. श. प. ब्रा. २ । २ । २ । १९ ) इतिकरणमाख्याना-धिकारसमाप्त्यर्थम् । एवं यत्र यत्र समाम्नाये आख्यातविकारो दृश्यते तत्र तत्र तथैव द्रष्टव्यं न्यायसाम्यात् । यथा–इमम्मे वरुण श्रुधी हवम् ( काण्व. श. प. ब्रा.            ) इति ॥ १७ ॥

---

१–इदमुदाहरणं चिन्त्यम् ॥

## एत आषोडशाक्षरात्पदं विकुर्वन्ति ॥ १८ ॥

एतं ' हि ' शब्दस्य आषोडशाक्षरादास्यातपदं विकुर्वन्ति आषोडशादभिविधिर्मर्यादा वा । तमेवारभ्य-आषोडशाक्षरान् यथालभ्यमुदाहरणानि दर्श्यन्ते । हुत्वास्येन्द्रियं वीर्य॑ सोमपीथमग्राचं हराणीति ( मा. श. प ब्रा. ) स यो हैवमेतꣳ सम्वत्सरमध्यात्मं प्रतिष्ठितं वेद ( मा. श. प ब्रा. १०।२।४।१६ ) नेदनिरेनुयानीति ( मा. श. प. ब्रा १०।४।१।१९ ) नेरत्तुदपचेतुयाताऽह्वाति ( मा. श प. ब्रा. ११।८।३।२२ ) इति ॥ १८ ॥

## आपञ्चत्रिꣳशादिति भारद्वाजः ॥ १९ ॥

द्वादय आरभ्य-आपञ्चविंशाक्षराद्वाख्यातपदं विकुर्वन्तीति भारद्वाज आचार्यो मन्यते । यथा येना नः पूर्वे पितरः पदज्ञाऽ अर्चन्तोऽ अङ्गिरसो गाऽअविन्दन् ( काण्व. श प ब्रा ) यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति ( काण्व. श प. ब्रा. ) इति ॥ १९ ॥

## आद्वात्रिꣳशादित्यौपशिविः ॥ २० ॥

द्वादय आरभ्य आद्वात्रिंशादक्षरादाख्यातपदं विकुर्वन्तीत्यौपशिविराचार्यो मन्यते । यथा-स यो हैवमेतꣳ सनद्रश्मं प्रजापतिमधिदैवतं चाध्यात्मं च प्रतिष्ठितं वेद ( मा. श. प. ब्रा १२।३।१।४ ) इति ॥ २० ॥

## आमर्यादास्ययोः पदयोर्बहूनां च पूर्वपदं विक्रियते ॥ २१ ॥

मर्यादा त्रिविधा-षोडशाक्षरा, पञ्चविंशत्यक्षरा, द्वात्रिंशदक्षरा, इति । तत्र षोडशाक्षरा प्रधानाऽभिहिता । पञ्चविंशत्यक्षराया, द्वात्रिंशदक्षराया वा पक्षे विक्रियते । पाक्षिकत्वादपरिपूर्णे इमे मर्यादे । अत्राङ्-ईषदर्थे वर्तते । आमर्यादा ईषन्मर्यादेत्यर्थः । आमर्यादायां तिष्ठत इत्यामर्यादस्थे । तयोरामर्यादस्थयोराख्यातयोः पूर्वमाख्यातपदं पञ्चविंशत्यक्षरान्तं द्वात्रिंशदक्षरान्तं वा विक्रियते । द्वादिनियोगे सर्वमनुवर्तते । तत्र द्वयोर्यथा-स यत्सायमस्तमिते जुहोत्यग्नावेवैभ्यस्तद्धविर्भ्यो जुहोति ( मा. श प. ब्रा. २।३।१।९ )-अथ यत्प्रातरनुदिते जुहोत्यस्य गर्भस्य जीवनस्य देवेभ्यो जुहवानि ( मा. श. प. ब्रा २।३।१।१२ ) बहूनामाख्यातानां यथा-स यत्सायमस्तमिते जुहोति गर्भमेवैतत्सन्तमभिजुहोति गर्भꣳ सन्तमभिकरोति । ( मा श. प ब्रा. २।३।१।४ )-अथ यत्प्रातरनुदिते जुहोति प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा विभ्राजमानऽउदेतीति । ( मा. श प. ब्रा. २।३।१।५ ) इति ॥ २१ ॥

## सर्वाणीत्यौपशिविः ॥ २२ ॥

इति श्रीभगवतः कात्यायनस्य कृतौ भाषिकपरिशिष्टसूत्रे द्वितीया कण्डिका
समाप्ता ॥ (२)

---

१ अनया कण्डिकया शतपथे मन्त्रगतानामभ्यस्तानां स्वरविकारप्रक्रिया प्रदर्शितेत्यवधेयम् ॥

अत्र सर्वाण्यपि—आमर्यादास्थितान्याख्यातपदानि आद्ययोगे विक्रियन्ते, इत्यौपशिविराचार्यो मन्यते । यथा—यस्मिन्नर्द्धे यजन्ते तेषां वा ऽ अन्वेनोत्तमो दीक्षते प्रथमोऽवभृथादुदायन्नामुदेति । ( मा. श. प. ब्रा. १२ । १ । १ । ९–१० )-ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् । ( मा. श. प. ब्रा. ४ । २ । २ । ९ ) इति ॥ २२ ॥

इति श्रीकण्ठशाखिनागदेवसुतश्रीमदनन्तदेवविरचिते भाषिकपरिशिष्टसूत्रभाष्ये द्वितीया कण्डिका परिसमाप्ता ॥ ( २ )

---

अथ तृतीया कण्डिका ।

अथ प्रागुक्ताख्यातविक्रियापवादकसूत्राणि ।

## विनियोगे तु पूर्वपदम् ॥ १ ॥

विनियोगेऽर्थे गम्यमाने पूर्वमाख्यातं विक्रियते नोत्तरम् । तुशब्दोऽवधारणे । यथा—तूष्णीं दर्भस्तम्बमुपदधाति यजुषाऽग्निहोति । ( मा. श. प. ब्रा ७ । २ । ४ । २९ )-तूष्णीमुदवसमग्नाविनुपति यजुषा वपति । ( मा श. प ब्रा. ७ । २ । ४ । २९ )-स वाऽइन्द्राग्निभ्यामुपदधाति विश्वकर्म्मणाऽऽसादयति । ( मा श. प. ब्रा. ८ । ३ । १ । ४ ) इति ॥ १ ॥

## जिज्ञासितयोश्च ॥ २ ॥

जिज्ञासितयोराख्यातयो पूर्वमाख्यातं विक्रियते नोत्तरम् । यथा—जुहुवानी ३ मा होषा ३मिति ( मा. श. प. ब्रा )-कथमस्यैतत्कर्म्म सम्वत्सरमग्निमाप्नोति कथं सम्वत्सरेणाग्निना सम्पद्यते ( मा. श. प. ब्रा ६ । २ । २ । ३१ ) इति ॥ २ ॥

## अनन्तर्हितयोश्च ॥ ३ ॥

अनन्तर्हितं भिन्नजातीयेनाव्यवहितमित्यर्थः । अनन्तर्हितयोराख्यातयो. पूर्वमाख्यातं विक्रियते, न द्वितीयम् । यथा पुरुषं ह नारायणं प्रजापतिरुवाच यजस्व यजस्वेति ( मा. श. प. ब्रा १३ । ६ । १ । १ ) अथ यज यज्ञेत्येवोत्तरानाह ( मा. श. प. ब्रा. ३।९।३।८ ) इति ॥३॥

## विचारितसमुच्चितयोश्च ॥ ४ ॥

विचारितं समुच्चितं चेति द्वन्द्वसमासः । विचारार्थकयो. समुच्चयार्थकयोश्चाख्यातयो पूर्वं विक्रियते, न द्वितीयम् । तत्र विचारार्थकयोर्यथा—यजेताज्यभागौ ना ३ इति यजेता ३ न यजेता ३ इति ( मा. श. प. ब्रा. ) समुच्चयार्थकयोर्यथा—शर्म्म च स्थो वर्म्म च स्थऽइति ( मा. श. प. ब्रा. ६ । ४ । १ । १० )-सुक्ष्मा चासि शिवा चासीति ( मा. श. प. ब्रा. १ । २ । ५ । ११ ) इति ॥ ४ ॥

## निर्वचनेऽनुबन्धो वाक्यशेषोऽवध्यर्थश्चावधारणो न विकुरुत. इति भारद्वाजः ॥ ५ ॥

निर्वचनं नाम—अन्वाख्यानम् । तच्च विधिरूपेण वा, अनुवादरूपेण वा पूर्वोक्तस्याख्यानस्यान्वाख्यानमित्यर्थः । अनुवध्यत इत्यनुबन्धः । पुनः पुनरावर्तनमित्यर्थः । अनुबन्ध इत्यत्र—**अन्येषामपि दृश्यते** (पाणि.सू. ६।३।१३७) इति पाणिनिसूत्रेण दीर्घता । निर्वचनेऽनुबन्धो वाक्यशेषो यस्मिन्नाख्याने तदाख्यानं न विकुर्वन्ति इति भारद्वाजाचार्यो मन्यते । तथा—अवधिर्यो योऽवसानगो यस्मिन्नाख्याने दृश्यते तदेति न विक्रियत इति भारद्वाजो मन्यते । अवधिरत्र कालविशेष उच्यते । विनियोगो वाक्यशेष इति प्रामाणिकादोऽयम् । क्रमेणोदाहरणानि । **दैवा दीक्षां निरमिमत्तादित्यै प्रायणीयम्** (मा. श. प. ब्रा. १२।१।२।१)—इत्यग्रे कृषत्यथेति (मा. श. प. ब्रा. ७।२।२।१४) भारद्वाजोक्तं विक्रियते वा । **वस्ताजिने पुष्टिकाममभिषिञ्चेत्कृष्णाजिने ब्रह्मवर्चसकाममुभयोरुभयकाममिति** (मा. श. प. ब्रा. ९।३।४।१४) इति प्रथमस्योदाहरणम् । द्वितीयस्योदाहरणं यथा—**एवमेव माध्यन्दिने सवनेऽगृहीतः एवं तस्माद्वच्छावाकायोत्तमो ग्रहो भवत्यथ तृतीयं वसतीवरीणामवनयति** (मा. श. प. ब्रा. ४।२।३।९) इति ॥ ५ ॥

## भूयोवादी वरीयोवादी कनीयोवादी चानवधारणाः ॥ ६ ॥

*भूयो बहुतरं वदतीति भूयोवादी । वरीयो गुरुतरं वदतीति वरीयोवादी । कनीयोऽल्पतरं वदतीति कनीयो-* वादी । एते भूयोवादादयः अनवधारणाः कार्यकारिणो न स्युः । भूयोवादादयः परभूतमाख्यानं न विकुर्वन्तीत्यर्थः । क्रमेणोदाहरणानि । **तस्य भूयो भूय एव तेजो भवति** (मा. श. प. ब्रा. २।२।२।१९)—**परः परऽएव वरीयस्तपो भवति** (मा. श. प. ब्रा. ३।४।४।२७)—**कनीयः कनीयस्तेजो भवति** (मा. श. प. ब्रा. २।२।२।१९) अनवम इति प्राप्तस्यापवादकमेतत् । नेष्यनुवर्तमाने पुनरनवधारणार्थ इति नञ्—अत्रानित्यत्वमूलनार्थं । येन शाखान्तरे पूर्वोक्तोदाहरणे आख्यातपदं विक्रियते, इत्यपि गम्यत इति । अनवधारणा इति किं ? अन्यत्रापि यत्र विकारो दृश्यते तत्रानवधारणेऽपि सति विकारो मा भूदिति । यथा—**एव ँ हैन ँ स उद्दीपयति** (मा. श. प. ब्रा. २।२।२।१९)—**एव ँ हैव श्रिया यशसा भवति** (मा. श. प. ब्रा.                )—**एव ँ हैन ँ स जागयति** (मा. श. प. ब्रा. २।२।२।१९)—**एव ँ हैव कीर्त्या यशसा श्रिया श्वः श्वः श्रेयान्भवति** (काण्व. श. प. ब्रा.                ) इत्यादि ॥ ६ ॥

## परिसमाप्त्यर्थश्चान्यतमो ह्यादीनां न विकरोति ॥ ७ ॥

'हि, हन्त' इत्यादयो विकारकारिण इत्युक्तम् । कश्चित्तस्यापवादः । ह्यादीनां मध्येऽन्यतम एकतमः परिसमाप्त्यर्थश्चेदाख्यानं न विकरोति । बहुष्वाख्यातेषु येनाख्यातेन सम्बध्यते तदेकमाख्यानं विकरोति । समीपस्थितान्यप्यन्याख्यातानि न विकुर्वन्ति । तस्मिन्नेव स्वसम्बद्धाख्याते परिसमाप्त्यर्थत्वात् । यथा—**कि ँ हि हरेयदन्तरिक्ष ँ हरामि दिव ँ हरामीति हरेत्** । (मा. श. प. ब्रा. १।२।४।१९) **हन्तास्यै प्रतिष्ठां कल्पयानीति स क्षिप्र ँ ससृजे** । (मा. श. प. ब्रा. १४।९।४।२)—**नेदन्योऽन्य ँ हिनसानीति** । (मा. श. प. ब्रा.         )—**स त्वष्टा चुक्रोध कुविन्मे पुत्रमवधीदिति** । (मा. श. प. ब्रा. १।६।३।७) इत्यादि ॥ ७ ॥

---

१–तदपि–आख्यातमपीत्यर्थः ।

## यमपदयोः स्वराद्योरल्पस्वरतरं प्रकृत्या ॥ ८ ॥

द्विरुक्तं पदं यमपदमित्युच्यते । स्वर आदिर्ययोः पदयोरस्ति ते स्वरादी [१] । अतिशयेनाल्पाः स्वरा यत्र पदे दृश्यन्ते तदल्पस्वरतरमिति विग्रहः । स्वराद्योर्यमपदयोर्मध्ये यदल्पस्वरतरं तत्प्रकृत्या स्यात् । अत्र सूत्रे तरग्रहणं तुल्यमल्पेष्वपि मात्राधिक्यादुत्तरस्य नाल्पस्वरत्वमिति भावः । यथा–तद्वै॒कैकयै॒वे॒मॉ॒ल्लो॒कान्स॒न्तनो॑ति । ( मा. श. प. ब्रा. १ । २ । ३ । १३ )–एकै॑कयै॒वे॒मॉ॒ल्लो॒कान्स्पृणुते । ( मा. श. प. ब्रा. १ । ३ । ९ । १५ )–तस्मा॒द्वै॒कै॑कामे॒वानवा॑नन्नु॒ब्रूयात् । ( मा. श. प. ब्रा. १ । ३ । ९ । १९ ) । अत्र पूर्वस्यैकशब्दस्योत्तरैकशब्दापेक्षया मात्राल्पत्वात्प्रकृतिस्वरत्वं ज्ञेयम् । अत्रैका चैका चेति समासे सति " स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणी-प्रियादिषु " –( पाणि सू. ६ । ३ । ३४ ) इति व्याकरणसूत्रेण टाब्लोपे पूर्वस्यैकशब्दस्यैकमात्रत्वमुत्तरस्य द्विमात्रत्वमिति विवेकः । यमाख्यातप्रमगादिनाख्यातयमार्थोऽयमारम्भः ॥ ८ ॥

## स्वराद्यस्वराद्योश्च सममात्रयोः पूर्वन्नेष्टमिति भारद्वाजः ॥ ९ ॥

स्वर आदिर्ययोः पदयोस्ते स्वरादी तादृशे ये न भवतस्ते अस्वरादी । चकारः समुच्चयार्थः । समा मात्रा ययोस्ते सममात्रे । स्वराद्योरस्वराद्योश्च सममात्रयोर्यमपदयोर्मध्ये पूर्वपदं प्रकृतिस्वरं नेष्टमिति भारद्वाजो मन्यते । अस्वरादिसममात्रार्थोऽयमारम्भः । तत्र स्वराद्योः सममात्रयोर्यथा–उ॒पो॑पे॒त्नु मघवन् । ( मा. श. प. ब्रा. २ । ३ । ४ । २८ ) अस्वराद्योः सममात्रयोर्यथा–प्रुष्वा॒ प्रुमा॒भि॒र्भ॒रतु॒स्य शृण्वऽ इति । ( मा. श. प. ब्रा. १ । ८ । १ । १४ )–सम् सु॒मि॑र्युवसे वृषन् । ( कण्व. श. प. ब्रा. )
सममात्रयोः किं ? उप–उत । उपोत । प्र–प्रति । प्रप्रति इति ॥ ९

## यथार्थं चतुर्विधं पदं विपर्यस्तम् ॥ १० ॥

नामाख्यातोपसर्गनिपातरूपं चतुर्विधं पदं यथार्थं मन्त्रे स्वरतो यद्व्याख्यातं तद्ब्राह्मणे स्वरतो विपर्यस्तं स्यात् । स च विपर्यासो व्याख्यातः पूर्वत्र भाषिके । " उदात्तमेनत् "–" स्वरितानुदात्तौ च "–" उदात्तमनुदात्त-मनन्त्यम् "–" अन्त्यं मरं हतानाम् "–" भाषिके चोभयेषाम् "–( भाषि. सू. १ । १३–१७ ) इति ॥ १० ॥

इति ब्राह्मणस्वरनियमप्रकरणम् ॥

---

१–अत्रेदं बोध्यम् । यत्–विच्छिन्नपाठे खण्डशः पदविच्छेदे च ब्राह्मणस्वरेणैव पाठः । न मन्त्रस्वरेण इत्येवमर्थकं चेदं सूत्रम् । यथा–इ॒शानो॑ रुक्म॒ऽ ऊर्ध्वः॑ स्व॒श्चो॑ति॒नि–( मा. श. प. ब्रा. ६ । ७ । २ । २ ) इति । मन्त्रदशायामस्योदात्ते ब्राह्मणदशायां सर्वोदात्तता । यज्ञ॒जुहु॒यात्क्षि॒प्रं यजमानमृतम्–( मा. श. प. ब्रा. ) इत्यत्र जुहुयादिति पदं सर्वोदात्तम् । यु॒जमा॑नꣳ स्व॒र्गंल्लो॒कम॒भि॒वह॑ति । ( मा. श. प. ब्रा. ११ । ४ । १ । १६ ) इत्यत्राभिरुपसर्गोऽविच्छिन्नः न सर्वोदात्तः । स वै प्रातु॒र॒ऽ एव । ( मा. श. प. ब्रा. १ । १ । १ । १२ ) इत्यत्र विच्छिन्नः 'वै' इति निपात उदात्त इति । " मन्त्रस्वरवद्विर्भूतपदे स्वरनिरूपणम् । पाणिनिप्रातिशाख्याभ्यां मतेच्छाप्रान्तरातप ॥ १ ॥ " इति । अत्र स्वरेदं सत्कारस्याप्युपलक्षणम् । " कण्ठ्य ककारे ह्रस्वम् " ( प्राति. सू. ४ । ४९ ) इत्यस्य प्रातिशाख्यबाहुल्यसूत्रस्यापवादकमेतत्सूत्रमिति ध्येयम् ॥

## कण्ठ्यस्वरोऽर्ऋत्सवर्णे ॥ ११ ॥

" अथ ब्राह्मणस्वरसंस्कारनियम. " ( भाषि. सू. १ । १ ) इति प्रतिज्ञातयोः स्वरसंस्कारयोर्मध्ये पूर्वं स्वरनियममुक्त्वा–अथेदानीं संस्कारनियममाह–कण्ठ्यस्वरोऽर्ऋत्सवर्णे इति । कण्ठे भवः कण्ठ्य. । कवर्गादिव्युदासार्थं स्वरग्रहणम् । कण्ठ्यस्वर अवर्णो ह्रस्वो दीर्घो वा–अर् स्यात्तदुत्तरेण ऋवर्णेन सह । ब्राह्मणे इत्यनुवर्तते । यथा–यत्किञ्च–ऋतुषु । यत्किञ्चर्तुषु क्रियते । (मा.श.प.ब्रा.११।२।७।२)यत्किञ्च–ऋतसत्याभ्याम् । यत्किञ्चर्तसत्याभ्यां जय्यं सर्वं हैव तज्जयति ( मा श. प.ब्रा.११।२।७।९)इत्यादि ह्रस्वोदाहरणम् । दीर्घोदाहरण यथा–तथा–ऋषीणाम् । तथर्षीणां तथा मनुष्याणाम् ( मा. श. प. ब्रा १४ । ४ । २ । २१ ) यथा–ऋतुम् । यथर्तुमप्राप्य ( मा श प ब्रा.        ) कण्ठ्यस्वर इति किं ? यदि–ऋतः । यद्यृतो भूरीति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ ( मा. श. प. ब्रा. ११ । ९ । ८ । ६ ) सवर्णे किं ? तम्–ऋतवः । सम्वत्सरो यजमानस्तमृतवो याजयन्ति ( मा. श. प. ब्रा. ११ । ६ । ७ । ३२ ) ब्राह्मणे किं ? यत्रा सप्त ऋषीन्पर एकमाहुः ( मा. स. १७ । २६ ) सप्त ऋषयः प्रतिहिताः ( मा. स. ३४ । ५५ ) इति च ॥ ११ ॥

## वकारस्य पदान्तस्य स्वरमध्ये लोपः ॥ १२ ॥

स्वरयोर्मध्ये वर्तमानस्य पदान्तस्य वकारस्य ब्राह्मणे लोपः स्यात् । यथा–द्वौ–इति । द्वा–इति । कत्येव देवा याज्ञवल्क्येति द्वा इत्योमिति होवाच ( क. श. प. बृ. १७ । ९ । ९ । १ ) त्रयस्त्रिंशौ–इति । इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशा इति ( क. श. प. बृ.१७।९।९।२) इति । वायो–इह । नियुद्भिर्वाय इह ता विमुञ्चेति ( क. श. प. ब्रा.        ) इत्यादि । ब्राह्मणे किं ? नियुद्भिर्वायविह ता विमुञ्च ( मा. स. २७ । ३३ ) इति ॥ १२ ॥

## शेषं सामान्यशास्त्रात् ॥ १३ ॥

अत्रोक्तविशेषादन्यच्छेषम् । सामान्यशास्त्राद्वेदाङ्गात्पाणिनीयव्याकरणशास्त्रात्तिदमवगन्तव्यमिति सूत्रार्थः । तत्र दिविषदन्त्वा नृषदम् ( क. श. प. ब्रा.        ) इत्यादि स्वयमूह्यम् ॥ १३ ॥

### अथ स्वरभेदप्रकरणम् ।

इदानीं वर्णधर्मानाह—

## अकारेकारोकारऋकारल्कारा अवर्णधारणाः ॥ १४ ॥

अवर्णस्य धारणा अवर्णधारणाः । अकारश्च, इकारश्च, उकारश्च, ऋकारश्च, ऌकारश्चेति तथेति द्वन्द्वसमासः ।

---

१–इत्युदाहरण चिन्त्यम् । २–तत्र सूत्र कण्वशाखाभिप्रायिकम् ।

अकारादयः पञ्च वर्णा अवर्णधारणाः । अष्टादशधा भिद्यन्ते इत्यर्थः । भेदास्तु—ह्रस्वदीर्घप्लुता इति पूर्वं अकारस्य त्रयो भेदाः, ततस्तेषां ह्रस्वदीर्घप्लुतानामुदात्तानुदात्तस्वरिता इति प्रत्येकं च त्रयो भेदाः, एवं नव भेदाः । इति नवभेदभिन्न —अकारः सानुनासिकनिरनुनासिकभेदेन द्विधा भिद्यते । इत्यकारस्याष्टादश भेदाः । तथा—इकारोकारऋकारऌकाराणामपि भेदा ज्ञातव्या इति सूत्रार्थः । यच्चापिशलिनोक्तं—" ऋवर्णऌवर्णयो-दीर्घा न सन्ति " इति तदिह न विद्यत इति । अकारादिपञ्चानां ग्रहणात् ए-ऐ-ओ-औ-इति सन्ध्यक्षराणां ह्रस्वाभावात् द्वादशैव भेदा भवन्तीति ज्ञापितम् ॥ १४ ॥

उक्तलक्षणं प्रसङ्गादन्यत्राप्यतिदिशति—

## शतपथवत्ताण्डिभाल्लविनां ब्राह्मणस्वरः ॥ १५ ॥

शतपथेन स्वरतस्तुल्यं वर्तत इति शतपथवत् । "तेन तुल्यं क्रिया चेद्वतिः " ( पाणि. सू. ५।१।११५ ) इति पाणिनीयसूत्रस्मरणात् । ताण्डिभाल्लविनः, ताण्डिनश्च भाल्लविनश्चेति विग्रहः । तेषां शतपथब्राह्मणस्वर स्यात् । अन्यत्राप्युक्तम् । " द्वितीयप्रथमावेतौ ताण्डिभाल्लविनां स्वरौ । तथा शतपथावेतौ स्वरौ वाजसनेयिनाम् । " इति सामगनारदशिक्षायाम् ॥ १५ ॥

प्रसङ्गात्सामस्वरमाह—

## सप्त साम्नाम् ॥ १६ ॥

यज्ञ वचने—तान्योऽध्वर्युर्गायेत् ( मा. श. प. ब्रा. ९।१।२।४३ ) इति यजुर्वेदेऽपि सामगानं विहितम् । अतस्तल्लक्षणमुच्यत इति नानुपपत्तिः । यत्तु प्रातिशाख्ये " सप्त " ( प्राति. सू. १ । १२७ ) इति सूत्रेणेदं प्रपञ्चितत्वान्न वक्तव्यमिति । तदपि न तत्र सामान्येनोद्दिष्टानामेव प्रपञ्च इति न कोऽपि क्षुद्रोपद्रवः ॥ १६ ॥

साम्नां सप्त स्वरा इत्युक्तं, के ते इत्याकाङ्क्षायामाह—

## षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादाः ॥ १७ ॥

षड्जश्च ऋषभश्चेत्यादिद्वन्द्वसमासः ॥ १७ ॥

प्रसङ्गात्तेषां स्थानान्याह—

## तेषां योनयः ॥ १८ ॥

तेषां षड्जादिसप्तसामस्वराणां योनयः कारणभूतानि स्थानानि दृश्यन्त इति सूत्रशेषः ॥ १८ ॥

---

१—अ-इ-उ-ऋ-ऌ-इत्येते पञ्च वर्णा अवर्णधारणा स्वरकार्यवर्णमपवादरहितभूता इत्यर्थः । तद्यथा—एते पञ्चापि प्रत्येक-ह्रस्व-दीर्घप्लुताः । अन्यत्राप्येवमेव ज्ञेयम् । "आहो विद्वानमु लोकं प्रेत्या कश्चित् समश्नुते ३ इति" प्लुतत्वमेकादशीयमपि । यथापि-उदात्तानुदात्तस्वरिता मन्द्रमध्यतारभेदाश्च नवधा भिद्यन्ते । सानुनासिकनिरनुनासिकत्वेनाष्टादशधा भिन्ना भाष्यन्ताः । यत्तत्राप्युपाख्यानं चापिशलिनो मतनिराकरणाय, तन्मते ऋ-ऌ-वर्णयोर्दीर्घता नेति । तदिह निराकृतं सूत्रकृता ऋ-ऌ-वर्णोपादानेन, " ऌकारो दीर्घः " ( प्राति. सू. ४ । १० ) इति प्रातिशाख्येऽष्टमेऽध्याये वर्णसमाम्नायपाठाच्चेति ।

२—" अथ ब्राह्मणस्वरसंस्कारनियम " ( प्राति सू. १ । ४ ) इत्यत्राविशेषविधानात्सर्वब्राह्मणेषु प्राप्ते, शतपथ इत्युपलक्षणम् ... शतपथेऽस्ति, तत्रैवानुपदिष्टा स्वराः । शतपथस्य समाम्नायः । ... काण्वमाध्यन्दिन ... । काण्वानां ... ... । ... स्वराः काण्वानां नास्ति ।